श्रीगुरुभ्यो नमः ॥

# अथ सप्तमोऽध्यायः ॥

## द्वितीयषट्कम् ।



अर्जुनः ॥ प्रथमषट्के संग्रहेण ज्ञानयोगं विस्तरेण कर्मयोगं ध्यानयोगं च प्रतिपाद्य तदुपयोगितया भक्तियोग आवश्यक इत्यंतिमश्लोके मद्गतेनांतरात्मनेति सूचितं ॥ स च भक्तियोगः कथं लभ्येत ॥ अविच्छिन्नपरमप्रीतिप्रवाहरूपाया भक्तेर्विधिना निर्बंध्य कारयितुमशक्यत्वात् ॥ नहि इदं कुर्वित्युक्तो यथा विहितं कर्म करोति न तथा प्रीतिं कुर्वित्युक्तः प्रीतिं ॥ भक्तिशब्दिता प्रीतिस्तु सति हृदयाकर्षके गुण स्वतएव जायेत ॥ सतिचैवं कथमहं भक्तियोगं कुर्यां ॥

भगवानुवाच —

**मय्यासक्तमनाः पार्थ योगं युंजन् मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

**मयीति** । हे पार्थ अर्जुन मयि योगं भक्तियोगं युंजन् योक्तुं मयि आ ईषत् अधिकं वा सक्तं मनः यस्य सः आसक्तमनाः सन् अहं आश्रयो यस्य सः मदाश्रयः सन् न विद्यते संशयः यस्मिन कर्मणि तत् असंशयं यथा तथा समग्रं यथा तथा मां यथा ज्ञास्यसि तत् तथा शृणु ॥ असंशयं संशयरहितं समग्रं पूर्णं मां इति वा ॥ १ ॥

हे अर्जुन सत्यं ॥ तथापि माभैषी ॥ भक्तियोग १ लाभाय मनो मयि निवेश्य कर्मयोगादिकं कुर्वन् मामेव परममाश्रयं मत्वा मत्तोऽन्यस्मिन्नाश्रयबुद्धिमकृत्वा २ असंशयं यथातथा समग्रं यथातथा मां यथा ज्ञास्यसि तथा शृणु ॥

१. युंजन्निति हेत्वर्थे शतृप्रत्ययः ॥ भक्तियोगं योक्तुं ॥ २. अ ॥ संशयरहितं ज्ञानैश्वर्यादिभिः पूर्णं मां ॥

तथा श्रवणे मन्माहात्म्यज्ञानमुदेति ॥ तत स्वयमेव गुणाकृष्टं मनो मयि लगति । स एव हि 'मद्गतेनांतरात्मने' ति सूचितो १ भक्तियोगः ॥ १

अर्जुनः ॥ श्रवणस्य वचनसापेक्षत्वात् यदुच्यते तदहं शृणुयाम् ॥

कृष्णः ॥ २ ज्ञानं तेऽहं ३ सविज्ञानं इदं वक्ष्याम्यशेषत ॥ १ ॥

ज्ञानमिति ॥ इदं विशेषेण ज्ञानं विज्ञानं विज्ञानेन सहितं सविज्ञानं ज्ञानं न विद्यते शेषः यस्मिन् तत् अशेषं तेन अशेषतः अशेषं यथातथा ते तुभ्यं अहं वक्ष्यामि ॥ १ ॥

विज्ञानसहितं मद्विषयकं ज्ञानं निश्शेषं तुभ्यं वक्ष्यामि ॥

अर्जुनः ॥ उच्यतां श्रुत्वा ज्ञास्यामि ॥ यदि ज्ञातव्यमवशिष्येत तदहं तदन्यतो ज्ञास्यामि ॥

कृष्णः ॥ यद्ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यते ॥ २ ॥

यदिति ॥ यत् ज्ञात्वा इह भूयपुन अन्यत् ज्ञातुं योग्यं ज्ञातव्यं नावशिष्यते ॥ तत् इदं ज्ञानं वक्ष्यामि ॥ २ ॥

मदुक्तज्ञानविज्ञानपरिज्ञाने सर्वज्ञस्त्वं भविष्यसि ॥ अतः ४ इह ५ ज्ञातव्यं नावशिष्यते ॥ २ ॥

१. द्वु ॥ केचित् ॥ भक्तियोगं कर्तुं मयि ईषत्सक्तमनाः सन् असंशयं समग्रं मां यथा ज्ञास्यसि तथा शृणु ॥ पश्चात् भक्तियोगं कुर्वन् मयि सम्यक् सक्तमनाः सन् मां असंशयं यथातथा समग्रं यथातथा यथावत् ज्ञास्यसि ॥ तेन मदाश्रयो भविष्यसि ॥ इदं च योग्यतानुगुणं ज्ञेयं ॥ वक्ष्यते च ॥ 'मद्भक्तिं, लभते परां ॥ भक्त्या मामभिजानाति' इत्यादि १८. (५४. ५५.) ॥ २. द्वै ॥ सामान्येन ज्ञातव्यं ॥ अ ॥ अपरोक्षज्ञानं ॥ वि ॥ मत्स्वरूपज्ञानं ॥ ३. द्वै ॥ विशेषेण ज्ञातव्यं ॥ अ ॥ तदेव परिपक्वं ॥ वि । येनाहं जगतो विलक्षणं तस्य विशेषस्य ज्ञान ॥ ४. द्वै ॥ मदुक्ते ॥ अ ॥ व्यवहारदशायां ॥ वि ॥ मयि ॥ ५. ज्ञानं ब्रह्म सविज्ञानं अनुभवसहितं अशेषतः साधनकलापसहितं ते वक्ष्यामि ॥ यत् ब्रह्म ॥ नावशिष्यते ॥ ब्रह्मज्ञानेन सर्वस्यापि ज्ञातत्वात् ॥ 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति ॥ (छां ६. १. ३.) श्रुतिः ॥

अर्जुनः ॥ यदि त्वन्माहात्म्यश्रवणं भक्त्युत्पादकं स्यात् तर्हि किमिति सर्वे श्रोतुं न प्रयतंते ॥ श्रुत्वा च भक्तिमन्तो न जायंते ॥ विरलाः खलु त्वयि भक्तिमन्तो लोके दृश्यंते ॥

कृष्णः ॥ मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः ॥ ३ ॥

मनुष्याणामिति ॥ मनुष्याणां सहस्रेषु मध्ये कश्चित् सिद्धये ज्ञानाय यतति यत्नं करोति ॥ यततां यत्नं कुर्वतां तेन सिद्धानां लब्धज्ञानानामपि मध्ये कश्चित् मां तत्वतः तत्वेन वेत्ति जानाति ॥ ३ ॥

मनुष्याणां अनेकेषु सहस्रेषु कश्चित् प्रतिबंधकपापरहितो मां ज्ञातुं प्रयतते ॥ तथा प्रयतमानानां सहस्रेषु कश्चित् श्रुत्वा ज्ञानवान् भवति ॥ तथा जानतां सहस्रेषु कश्चित् तत्वज्ञानवान् भवति ॥ अतो मद्विषयज्ञानादीनां दुर्लभत्वात् भक्तिमन्तो विरला दृश्यंते दुर्लभेऽर्थे जना विरला एव हि स्युः ॥ तदेव हि तस्यार्थस्य गौरवापादकं ॥ तथाह्यनुभूयते १ लोके ॥ उक्तं हि ज्ञानादीनां दुर्लभत्वं ॥ २ 'आश्चर्यव'दिति श्लोके ॥ ३

अर्जुनः ॥ भक्तियोगलाभाय मम माहात्म्यं वक्ष्यामीत्युक्तं । तदुच्यतां तत्कृपया ॥

संजयः ॥ वक्तव्येषु माहात्म्येषु यदितरसकलमाहात्म्यविलक्षणं ॥ यस्य श्रवणेन भगवति भक्तिरुदियात् ॥ तदेव हि वक्तव्यं ॥ तादृशं च विविधविचित्रानंतभेदभिन्नचराचरात्मकनानावस्तुनिचितसकलजगत्सृष्टिसंहारादिकर्तृत्वरूपं ॥ इति, तद्वक्तुमुपक्रमते भगवान् ॥

कृष्णः भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ८ ॥

---

१. अल्पधनानामपि सुप्रवेशायां अल्पधनलभ्यपण्यवस्तुनिचितायां पण्यवीथिकायां जनसंमर्दः सुमहान् दृश्यते ॥ नृपतत्तुल्यजनैकग्राह्यमहार्घपण्यवस्तुनिचिते महाऽऽपणे अन्वेष्टव्यो भवत्यंतःप्रवेष्टा ॥ तदेव तस्य गौरवाऽऽपादकं ॥ दृश्यते चेदं राजधान्यादौ ॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

**भूमिरिति** ॥ भूमिः पृथिवी आपः जलानि अनलः अग्निः वायुः खं आकाशः मनः बुद्धिः अहंकारश्चैव इति अष्टधा अष्टभिः प्रकारैः भिन्ना इयं मे प्रकृतिः ॥ ४ ॥

**अपरेति** ॥ हे महाबाहो अर्जुन इयं पूर्वोक्ता प्रकृतिः अपरा अवरा ॥ इतः अस्याः प्रकृतेः अन्यां जीवं जीवत्वं भूता प्राप्ता जीवभूता तां अतएव परां उत्कृष्टां मे प्रकृतिं विद्धि ॥ सा कीदृशी, यया इदं भूम्यादि जगत् धार्यते ॥ तां परां प्रकृतिं विद्धि ॥ तुशब्दो विशेषे ॥ ५ ॥

**एतद्योनीनीति** ॥ सर्वाणि भूतानि एते द्वे प्रकृती योनिः कारणं येषां तानि एतद्योनीनि इति उपधारय जानीहि ॥ अहं कृत्स्नस्य सर्वस्य जगतः प्रभवत्यस्मादिति प्रभवः सृष्टिकर्ता ॥ तथा प्रलीयतेऽस्मिन्निति प्रलयः संहारकर्ता च ॥ ६ ॥

पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहंकारात्मना अष्टधा भिन्ना कुलालस्य मृदिव मम जगत्सृष्टेस्साधनभूता जडप्रकृतिरेका प्रकृतिः ॥ सा च अवरा ॥ जडत्वात् ॥ आत्मतया तदाधारभूता चेतनत्वादुत्कृष्टा जीवस्वरूपभूता १ प्रकृतिरन्या ॥ उभयमिदं मदधीनं ॥ एतदुभयसंयोजनेन चराचरात्मकानि भूतानि सृजाम्यहं ॥ तानि चांततो २ मया मयि वा लीयन्ते ॥ अतोऽहं सर्वस्य जगतः सृष्टिकर्ता संहारकर्ता च ॥ इतीमं महिमानं जानीहि । वक्ष्यते च ॥ ३ 'यावत्संजायते' इत्यत्र ॥ ४ 'ममयोनिर्महद्ब्रह्म' त्यत्र च स्पष्टमिदम् ॥ ४ ॥ ५ ॥ ६ ॥

अर्जुनः ॥ जगतस्त्वमिह तव सृष्टिसंहारयोः कर्ता कः ॥

कृष्णः ॥ मत्तः परतरं नान्यत् किंचिदस्ति धनंजय ॥ ६ ॥

१. द्वे. ॥ चित्प्रकृतिशब्दिता कुलालभार्यास्थानीया महालक्ष्मीः ॥ २. प्रलीयते अस्मिन् अनेन वा प्रलयः ॥ ३. १३. २७. ४. १४. ३.

मत्त इति ॥ हे धनंजय अर्जुन मत्तः ममसकाशात् अतिशयेन परं परतरं अन्यत् किंचिदपि नास्ति ॥ ६ ॥

मत्तोऽन्यत् किंचित् परतरं नास्ति ॥ अहं सर्वस्मात् परः मत्तः परस्य सत्वे स परतर इत्युच्येत ॥ तादृशो नास्ति ॥ तस्य सत्वे सः मम स्रष्टा संहर्ता च स्यात् ॥ परतर एव न कुतः परतमः ॥ अतोऽहमेव परः परतरः परतमश्च ॥ अतो न मम जन्ममरणे ॥ उक्तं चेदं ॥ १ 'अजोऽपि स 'न्नित्यादौ बहुशः ॥

अर्जुनः ॥ त्वया सृष्टस्य संहरिष्यमाणस्य च जगतः स्थितिकाले आधारः कः ॥ कमाश्रित्येदं जगज्जीवति ॥ यदि सः त्वत्तोऽन्यः स्यात् तर्हि त्वमिव सोऽपि ॥ अतः कथं 'मत्तः परतरं ने' त्युक्तं युज्यते ॥

**कृष्णः ॥ मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

मयीति ॥ सूत्रे मणीनां गणाः मणिगणाः इव सर्वं इदं जगत् मयि प्रोतं आश्रितं ॥ ७ ॥

इदं सर्वं जगत् मयि आश्रितं ॥ अत आधारोऽप्यहमेव ॥ अतो मत्तः परतरं नेति ॥ युक्तं यदि त्वमाधारः स्याः जगदाधेयं स्यात् तर्हि त्वं दृश्येथाः न दृश्येत जगत् ॥ लोके आधारभूतं पेटिकादि दृश्यते ॥ तत्र स्थितं आधेयं आभरणादि न दृश्यते ॥ इदं च विपरीतं ॥ आधारस्त्वं न दृश्यसे ॥ आधेयं च जगद्दृश्यते ॥ अतः कथं 'मयि प्रोत' मिति ॥ इति चेत् नासौ दृष्टांतः प्रकृते ॥ वर्तते चान्यो दृष्टांतः ॥ स च 'सूत्रे मणिगणा इवे' ति ॥ आधारभूतं सूत्रं अंतः प्रविश्य धारणात् यथा न दृश्यते ध्रियमाणा मणय एव दृश्यंते तथा नियामकतया अंतः प्रविश्य धारणादहं न दृश्ये दृश्यते च ध्रियमाणं जगत् ॥ अतो 'मयि प्रोत' मिति युक्तम् ॥७॥

अर्जुनः ॥ अस्तु तव सृष्टिस्थितिसंहारकर्तृत्वं ॥ त्वया सृष्टस्य ध्रियमाणस्य संहरिष्यमाणस्य वस्तुनः विशेषाऽऽधायकः कश्चिदन्यः स्यादिति भाति ॥ लोके सृष्टिस्थितिसंहारकर्त्रपेक्षया अन्यस्य विशेषाधानकर्तुरुपलंभात् ॥ अनेन प्रभुणा

---

१. ४. ६.

अहमिमं उत्कर्षं प्रा ... ति लोकोक्तिदर्शनात् ॥ यदि स्यात् सोऽपि स्वमिव ॥ अत: कथं 'मत्त: पर ... ने' ति ॥

कृष्ण: ॥ रसोऽहमप्सु कौंतेय प्रभाऽस्मि शशिसूर्ययो: ॥
प्रणव: सर्ववेदेषु शब्द: खे पौरुषं नृषु ॥ ८ ॥

पुण्यो गंध: पृथिव्यां च तेजश्चास्मि विभावसौ ॥
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ॥
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥

बलं बलवतां चाहं कामरागविवर्जितम् ॥
धर्माऽविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

रस इति ॥ हे कौन्तेय अर्जुन अहं अप्सु जलेषु रस: अस्मि ॥ शशी चन्द्र: स च सूर्यश्च शशिसूर्ययो: तयो: शशिसूर्ययो: प्रभा अस्मि ॥ सर्वे च ते वेदाश्च सर्ववेदा: तेषु सर्ववेदेषु प्रणव: ओंकार: अस्मि ॥ खे आकाशे शब्द: अस्मि ॥ नृषु पुरुषेषु पुरुषस्य भाव: पौरुषं अस्मि ॥ ८ ॥

पुण्य इति ॥ पृथिव्यां पुण्य: श्लाघ्य: गंध: सुगंधश्च अस्मि ॥ विभावसौ अग्नौ तेजश्च अस्मि ॥ सर्वाणि च तानि भूतानि च सर्वभूतानि तेषु जीवनं अस्मि ॥ तप: एषामस्तीति तपस्विन: तेषु तपश्च अस्मि ॥ ९ ॥

बीजमिति ॥ हे पार्थ मां सर्वाणि च तानि भूतानि च सर्वभूतानि तेषां सनातनं अनादि बीजं कारणवस्तु विद्धि ॥ बुद्धि: एषां अस्तीति बुद्धिमंत: तेषां बुद्धि: अस्मि ॥ अहं तेज: एषां अस्तीति तेजस्विन: तेषां तेज: अस्मि ॥ १० ॥

बलमिति ॥ अहं कामश्च रागश्च कामरागौ ताभ्यां विवर्जितं रहितं बलं

रुषां अस्तीति बलवंतः तेषां बलं च अस्मि ॥ हे भरतर्षभ अर्जुन भूतेषु प्राणिषु न विरुद्धः अविरुद्धः धर्मस्य अविरुद्धः धर्माविरुद्धः कामः अस्मि ॥ ११ ॥

सर्वेषां उत्कर्षाऽऽधायकविशेषाऽऽधानकर्ताऽप्यहमेव ॥ अपामुत्कर्षो रसेन ॥ चंद्रसूर्ययोरुत्कर्षः प्रभया ॥ वेदानामुत्कर्षः आद्यंतयोरुच्चार्यमाणप्रणवेन ॥ आकाशस्योत्कर्षः ज्ञानजनकतया सर्वलोकव्यवहारहेतुभूतशब्देन ॥ नृणामुत्कर्षः पुंस्त्वेन ॥ पृथिव्याः उत्कर्षः सुगन्धेन ॥ अग्नेरुत्कर्षः तेजसा ॥ जीवतां भूतानां उत्कर्षो [१]जीवनेन ॥ तपस्विनामुत्कर्षस्तपसा ॥ तत्तत्पदार्थानामुत्कर्षस्तत्तद्बीजशक्त्या ॥ बुद्धिमतामुत्कर्षो बुद्ध्या ॥ तेजस्विनामुत्कर्षस्तेजसा ॥ बलिनामुत्कर्षो बलेन ॥ तत्तत्कार्यकर्तृणां उत्कर्षस्तत्तत्करणेच्छया ॥ अहं च तत्र तत्रोत्कर्षाऽऽधायकत्वेन वर्तमानोऽस्य रसादेर्नियामकः ॥ स्वरूपसत्ताप्रदश्च ॥ अतस्तत्र तत्र स्थित्वा तत्तदुत्कर्षाऽऽधानकर्तृत्वादुक्तं ' मत्तः परतरं ने ' त्युक्तं ॥ अपकर्षाऽऽधायकानां दुर्गंधादीनामप्यहमेव नियामकः ॥ तथापि उत्कर्षाऽऽधायकसुगंधादिनियामकत्वेनैवाहमुपास्यः मदतिशयितप्रीतिलाभाय ॥ भक्तियोगेनोपासनाप्रस्तावोह्ययं ॥ नहि लोके प्रीतिलाभाय प्रीत्योपासनं कुर्वाणाः प्रभुं दोषवंतमपि दोषत्वेनोपासते ॥ अपि तु गुणवत्त्वेनैव ॥ अत एव एतत्प्रदर्शनार्थं दुर्गंधव्यावृत्तये 'पुण्य' इति विरुद्धकामव्यावृत्तये 'धर्माविरुद्ध' इति, [२] कामरागकारणभूतबलव्यावृत्तये 'कामरागविवर्जितमिति, गंधकामबलानां विशेषणान्युपात्तानि ॥ अतः गंधोहमित्युक्ते दुर्गंधोऽपि त्वमेववेति, कामोहमित्युक्ते त्वया वा प्रयुक्तास्सर्वे पापं चरंति ॥ उक्तं हि ॥ 'केन प्रयुक्तोऽयं पापं चरती' ति पृष्टेन त्वया कामेन प्रयुक्त इति 'काम एष' इत्यत्रेति ' बलमहमित्युक्ते कामरागयोः कारणं बलं वा त्वं त्वया वा कामिनो रागिणश्च भवंति इति च न त्वयावाच्यम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

अर्जुनः ॥ किमेतावतामेव नियामकस्त्वं ॥ ब्रूहि ॥

१. टं. ॥ प्राणधारणं ॥ अ ॥ वि ॥ येन भूतानि जीवंति तत् प्राणधारणहेतुभूतं वस्तु च ॥ २. अ ॥ अप्राप्ते कामः ॥ प्राप्ते रागः ॥ टं ॥ वि ॥ कामरागौ अवस्थाविशेषौ ॥ कामरागः विषयरागः इति वा ॥ टं ॥ विषयभोगनिरपेक्ष रागप्रयुक्ताकार्ये अनुपयुज्यमानं च ॥

कृष्णः ॥ ये चैव सात्विका भावा राजसास्तामसाश्च ये ॥
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

य इति ॥ ये भावाः पदार्थाः सात्विकाः येच राजसाः तामसाश्चैव ॥ तान् मत्तः ममसकाशात् जाता एव इति विद्धि ॥ अहं तेषु न ॥ ते तु मयि ॥ १२ ॥

ये सात्विकाः ये च राजसाः तामसाश्च पदार्थाः ते मत्त एव । तेषां नियामकः स्वरूपसत्ताप्रदश्च अहमेव ॥ नाहंतदाश्रितः ते तु मदाश्रिताः ॥ तैर्न ममोपकारः ॥ मयैव तेषामुपकारः ॥ एवं तान् जानीहि ॥ १२ ॥

अर्जुनः ॥ यदि त्वमीदृशः तर्हि त्वामेतादृशगुणगुणविशिष्टं कुतो जनाः न जानते ॥

कृष्णः ॥ त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत् ॥
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

त्रिभिरिति ॥ गुणस्वरूपाः गुणविकारा वा गुणमयाः तैः त्रिभिः एभिः भावैः पदार्थैः सर्वं इदं जगत् मोहितं ॥ अतः एभ्यः परं विलक्षणं न विद्यते व्ययः यस्य सः अव्ययः तं मां नाभिजानाति ॥ १३ ।

सत्वरजस्तमोगुणात्मिकया मायाख्यया प्रकृत्या तत्कार्यैश्च मोहिता जनाः गुणेभ्यः गुणकार्येभ्यश्च बहिर्भूतं मां न जानंति ॥ यद्यहं त इव तदंतर्गतस्स्यां तर्हि तदंतर्गतास्ते मां जानीयुः ॥ नाहं तदंतर्गतः ॥ अपि तु तेभ्यो बहिर्भूतः ॥ ततो न मां जानंति ॥ विपरीतं च जानते ॥ मायाशक्तिस्तादृशी ॥ ऐंद्रजालिकमायापि विद्यमानं तिरोधापयति ॥ अविद्यमानं किंचित्प्रदर्शयति ॥ किमुतेयं माया ॥ वक्ष्यते च ॥ १ 'योगमायासमावृतः' इति ॥ १३ ॥

अर्जुनः ॥ मायाख्ययवनिकाऽऽवृतत्वात्तव त्वां जना न जानंति ॥ तामपसार्य जानंतु ॥

१. ७. २५.

कृष्णः ॥ दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ १३ ॥

दैवीति ॥ एषा गुणमयी गुणस्वरूपा देवस्य इयं दैवी द्योतमाना च दिवु [का]न्तौ ॥ सृष्ट्यादिक्रीडोपयोगिनी च दिवु क्रीडायां ॥ मम माया दुःखेनापि अत्ये[तु]मशक्या ॥ अदुरत्यया इति च्छेदः ॥ न दुरत्यया अदुरत्यया च ॥ हि प्रसिद्धम् ॥

जगत्सृष्ट्यादिसकलक्रीडोपयोगिनी द्योतमाना देवस्य तस्य त्रिगुणात्मिका [म]ाया १ न केनाप्यपसारयितुं शक्या ॥ देवेन मया प्रसारितत्वात् ॥ प्रभुणा गौ[र]वानुरोधेन स्वनिगूहनाय प्रसारितां यवनिकां न कोऽपि दूरीकर्तुं शक्नोति से[व]कादिरिति प्रसिद्धम् । अलं गीतोपदेशेन ज्ञानार्थं हि गीतादिकम् ॥ न च ज्ञानं लब्धुं शक्यम् ॥ ज्ञेयस्य भवतो माययाऽऽवृतत्वात् ॥ तस्याश्चापसारयितुमशक्य[त्]वात् ॥ इति चेत् मम माया 'अदुरत्यया' ॥ किमस्थाने निराशोऽसि ॥ शक्यमेव लब्धुं ज्ञानम् ॥ आच्छादिकाया मायायाः त्वया दूरीकर्तुमशक्यत्वेऽपि मया २ दूरीकर्तुं शक्यत्वात् ॥ १३ ॥

अर्जुनः ॥ त्वया प्रसारितां मायां दूरीकर्तुं शक्त एव त्वम् ॥ केषां दूरीकृत्य मायां ज्ञानमुत्पादयसि ॥ के त्वया मायां तरन्ति ॥

कृष्णः ॥ मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।

मामिति ॥ ये मामेव प्रपद्यन्ते शरणीकुर्वन्ति ते एतां मायां तरन्ति ।

मामेव ये शरणीकुर्वन्ति ते मायां तरन्ति आवरणापगमेन ज्ञानं प्राप्नुवन्ति । यवनिकां प्रसारितवन्तं वशीकृत्य तेन तामपसार्य तदावृतस्य वस्तुनो दर्शनं प्रसिद्धं हि लोके ॥ ३ 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ॥ यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्' ॥ इति श्रुतिः ४ तदव्यक्तमाह हि' ॥ ५ 'अतोऽनन्तेन तथा हि लिङ्गम्' इति सूत्रे च एतमर्थं बोधयन्ति । अतः श्रोतव्यमेव गीतादिकम् ॥ १४ ॥

१. दुरत्यया इतिच्छेदः । २. अदुरत्यया इति छेदः । ३, का. २. २३. । ४ ३. २. २३. । ५. ३. ३ २७.

मफलं संपद्यते ॥ ते मम प्रिया इत्यनुक्तेः ॥ इति चेत् अत्यर्थं ॥ ते त्रयोऽपि मम प्रियाः तेषामहं प्रियः ॥ कृतपुण्यत्वात् मदाश्रयणाच्च ॥ ज्ञानी तु मम १ अत्यर्थं नितरां प्रियः ॥ अहं ज्ञानिनः नितरां प्रियः ॥ अयमेव तेभ्यस्त्रिभ्यस्तस्य फले विशेषः ॥ तेषां त्रयाणां मद्भजनान्मत्प्रीतिरूपं फलं विद्यत एव ॥ अन्यथा आर्त्तिनिवृत्त्यादिफलप्राप्त्यसंभवात् ॥ ज्ञानिनस्तु मत्प्रीतिफले महान् विशेषः ॥ १७ ॥

अर्जुनः ॥ नाहं ज्ञानी अपि तु त्वां सेवमानानां त्रयाणामन्यतमः ॥ अतो नाहमत्यर्थं तव प्रियः ॥ सर्वैः प्रकारैरहं प्रियो भवितुमर्हामि ॥ तथाविधं मां प्रियोऽसीत्यनुक्त्वा ज्ञानित्वमात्रेण ज्ञानिनं प्रियं ब्रूषे ॥ अन्याय्यमिदं ॥ मदपेक्षया स वा तव प्रियः ॥ उक्तं हि त्वया ॥ 'भक्तोऽसि मे सखा चेती'ति ॥ तत्किं मृषा ॥ ब्रूहि ॥

कृष्णः ॥ उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ १७॥ ॥

उदारा इति ॥ एते सर्वे उदाराः उत्कृष्टा एव ॥ ज्ञानी तु मे आत्मैव इति मे मतम् ॥ १८ ॥

२ एते सर्वे कृतपुण्याः मदाश्रयणात् ३ उदारा एव ॥ तर्हि ज्ञानी अत्यर्थं प्रियः कथमिति चेत् ज्ञानमाहात्म्यं तादृशं ॥ तं ज्ञानीति पृथक् निर्दिश्य प्रियत्वोक्त्या तव आक्षेपावकाशो लब्धः ॥ न तथा ॥ स तु मम ४ आत्मैव ॥ अहमेव सः ॥ अतोऽत्यर्थं प्रियः ॥ सर्वस्य प्रियो ह्यात्मा अत्यर्थं ॥ इति मे निश्चयः ॥ २७॥ ॥

अर्जुनः ॥ तस्य तादृशो महिमा कुतः ॥

१ वि ॥ ज्ञानी मम अहं ज्ञानिनः यथा प्रियः तथा वक्तुं न शक्यं ॥ अनुभवैकवेद्यं वक्तुमशक्यं ॥ २. द्वै ॥ चत्वारः ॥ अ ॥ वि ॥ ३. द्वै ॥ अ ॥ उत्कृष्टाः ॥ वि ॥ आर्तादयस्त्रयः वदान्याः मत्तः किंचित्फलं प्राप्य मद्वैभवप्रख्यापनान्मम सर्वस्वदायिनः ॥ ४. वि ॥ शरीरी शरीरिणं विना शरीरमिव तं विना नाहं स्थितिं लभेय ॥ द्वै ॥ प्रियत्वसादृश्यादभेदोक्तिः ॥

कृष्णः ॥ आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥

आस्थित इति ॥ सः ज्ञानी हि यस्मात् युक्तः आत्मा मनः यस्य सः युक्तात्मा तादृशः सन् न विद्यते उत्तमं यस्याः सा अनुत्तमा तां अनुत्तमां गम्यत इति गतिः प्राप्यं तां तादृशं मामेव आस्थितः प्राप्तुं प्रवृत्तः ॥ तस्मात् सः मे आत्मा ॥ १८ ॥

यस्मात् मयि मनोयोगयुक्तः परमप्राप्यं मामेव प्राप्तुं सर्वैः प्रकारैः प्रवृत्तः तस्मात् सः ममात्मा ॥ १८ ॥

अर्जुनः ॥ ज्ञानिनमात्मानं ब्रूषे ॥ महान् हि ज्ञानिनो महिमा ॥ कदाऽहं ज्ञानी भूत्वा तं महिमानमाप्नुयाम् ॥ कदाऽहं तवात्मा स्याम् ॥ ब्रूहि ॥

कृष्णः ॥ बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ॥
वासुदेवः सर्वमिति समहात्मा सुदुर्लभः ॥ १९ ॥

बहूनामिति ॥ बहूनां जन्मनां अन्ते सर्वं वासुदेवः इति ज्ञानं अस्यास्तीति ज्ञानवान् सन् मां प्रपद्यते प्राप्नोति ॥ महांश्चासौ आत्मा च महात्मा महान् आत्मा यस्य इति वा ॥ सः सु नितरां दुर्लभः ॥ १९ ॥

न ज्ञानं सुलभम् ॥ अपि तु अनेकजन्मसमाचीर्णपुण्यपरिपाकलभ्यम् ॥ न हि अयुतनियुतद्रव्यक्रेयो ग्रामादिः द्विवसंवत्सरायेन क्रेतुं शक्यते ॥ अपि तु बहुसंवत्सरायलब्धद्रव्येण क्रमाद्राशीकृतेन ॥ अतो बहूनां जन्मनां अन्ते ज्ञानवान् भवति। कीदृशं तत् ज्ञानम् ॥ इति चेत् 'वासुदेवः सर्वमिति' ॥ १ सर्वं जगत् रमाचतुर्मुखादिकं महदहङ्कारादिकं २ वासुदेव इति ज्ञानम् । ईदृशस्य अनेकजन्मसमाचीर्णपुण्यपरिपाकलब्धस्य ज्ञानस्य किं फलमिति चेत् 'मां प्रपद्यते' ॥ तेन ज्ञानेन मां ३ प्राप्नोति ॥ मत्प्राप्तिः फलम् ॥ किमेतादृशं ज्ञानं लब्ध्वा त्वां प्राप्तुमर्हन्ति बहवः इति चेत्

---

१ प्राप्यं प्रापकं सर्वमप्यन्यन्मनोरथवृत्ति ॥ २. द्वै ॥ भगवदधीनस्वरूपसत्ताकम् । ॥ अ ॥ भगवदभिन्नम् ॥ वि ॥ भगवच्छेषतैकरसम् ॥ ३. अ ॥ प्राप्नोति ॥ भजते वा ॥ वि उपास्ते ॥

'स महात्मा सुदुर्लभः' ॥ महानुभावो हि सः ॥ अत एव हि 'आत्मैव मे' इत्युक्तम् । सः नितरां दुर्लभः । लक्षसहस्रकोटिष्वेकः ॥ १९ ॥

अर्जुनः ॥ कुतस्तस्य दुर्लभता ॥ दृश्यन्ते हि शते नवतिरास्तिकाः ॥ ज्ञानोपयोगिमनःशुद्ध्यापादककर्मानुष्ठानपराश्च ॥ अतो बहवःस्युरीदृशाः । सति चैवं सुदुर्लभ इति कथमुक्तम् । ब्रूहि ॥

कृष्णः ॥ कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ॥
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

कामैरिति ॥ स्वया स्वकीयया प्रकृत्या नियताः नियामिताः अतः तैस्तैः कामैः इच्छाविशेषैः हृतं ज्ञानं विवेकः येषां ते हृतज्ञानाः जनाः स्वं स्वं नियमं आस्थाय आश्रित्य अन्याश्च ताः देवताश्च अन्यदेवताः प्रपद्यन्ते आश्रयन्ते ॥ २० ॥

आस्तिकतया अनुष्ठानपरतया चोपलभ्यमानाः तत्तत्क्षुद्रफलेच्छया अविवेकिनो भूत्वा देवतान्तराणि भजमानाः खल्वन्ततो ज्ञायेरन् ॥ कष्टमिदम् ॥ तत्तत्फलकतत्तद्देवताप्रसादजनकतत्तत्कर्मकरणाय तत्तदङ्गभूतान् नियमान् सुदुष्करान् महताऽऽयासेनानुतिष्ठन्ति ॥ यत्किञ्चिदंगवैकल्ये हि प्रत्यवायप्राप्तया ईप्सितहानिः स्यात् ॥ फलापेक्षया कर्म कुर्वतां अङ्गवैकल्ये इष्टहानिः अनिष्टप्राप्तिश्च लोके प्रसिद्धा ॥ मोक्षैकफलकमत्प्रसादजनकाकाम्यकर्म कुर्वतां अङ्गवैकल्येऽपि न प्रत्यवायोत्पत्तिः ॥ तादृशी हि ममोदारता ॥ अकाम्यकर्मणः तादृशो महिमा अकाम्यत्वादेव ॥ उक्तं च मया ॥ १ 'प्रत्यवायो न विद्यते' इति ॥ कुतोऽल्पफलाय तथा श्राम्यन्ति इति चेत् तदीया प्रकृतिस्तथा कारयति ॥ प्रकृतिवशो हि सर्वो लोकः । उक्तं च ॥ २ 'प्रकृतिं यान्ति भूतानि' इति ॥ वक्ष्यते च ॥ ३ 'प्रकृतेर्वशा' दिति । अतः फलानपेक्षया कर्म कृत्वा ज्ञानवान् भूत्वा मां प्राप्तुमर्हः सुदुर्लभ एवेति युक्तमुक्तम् ॥ २० ॥

१. २ ४०. । २. ३ ३३. । ३. ९ ८ ।

अर्जुनः ॥ देवतान्तराणि भजमानान् निन्दसि ॥ तेन देवतान्तरभजनमकार्यं व्यर्थमिति भाति ॥ किं तदकार्यं किं तेषु तव प्रद्वेषादेवं वदसि यदि तेषु तव न प्रद्वेषः तद्भजनं च कार्यं तर्हि तत्र तेषां तेषां जायमानां श्रद्धां त्वं वर्धयेः ॥ किं त्वं तां तथा वर्धयसि ॥

कृष्णः ॥ यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

य इति ॥ यो यो भक्तः सन् यां यां तनूं श्रद्धया अर्चितुं इच्छति अहं तस्य तस्य तामेव श्रद्धां न चला अचला तां विदधामि करोमि ॥ २१ ॥

न देवतान्तराणि भजमानान् निन्दामि ॥ न तेषु मम प्रद्वेषः ॥ ते हि मम तनवः ॥ तद्भजनं ममेष्टमेव ॥ इष्टमेव हि शरीरतदवयवाराधनं शरीरिणः ॥ अतः तद्भजने जायमानां श्रद्धामहं वर्धयामि ॥ यो यो भक्तः सन् श्रद्धया यां यां इन्द्रादिदेवतारूपां मदीयां तनुं अर्चितुमिच्छति तस्य तस्य तामेव श्रद्धां अचञ्चलां करोमि ॥ वेदशास्त्रसदाचारविमुखाः वैदिकेषु कर्मस्वनास्थया अकृत्वा वैदिकं कर्म प्रायो निरयभागिनो भवन्ति लोके मूढाः ॥ किमहो कृत्वा वैदिकं कर्म गत्वा स्वर्गं भुक्त्वा रम्भासम्भोगादिकान् भोगान् लोकमिममागत्य स्वर्गे भुक्त्वा भोगानागतोऽस्मीति कोऽपि ब्रूते ॥ पुष्पितकिंशुकवृक्षवदापातरमणीयया रम्भासम्भोगादिसुखप्रतिपादिकया कर्मकाण्डात्मिकया वाचा मोहिता मूढाः १ कर्म कुर्वते । इति परिहसन्ति च ॥ सति चैवं यः आस्तिको भूत्वा स्वर्गादेः सद्भावं यागादेस्तत्साधनतां च श्रद्धाय यागादिभिरिन्द्रादीनर्चितुमारभते ॥ तस्मिन् मम प्रीतिरुत्पद्यते ॥ हन्त श्रद्धावानयमभूदिति ॥ तया प्रीत्या दैवादयं श्रद्धावानभूत् ॥ वर्धमानया अनया श्रद्धया लभतामयं श्रेयांसीति वर्धयामि तामहं श्रद्धाम् ॥ इष्टमेव देवतान्तरभजनं मम ॥ अत एव हि २ 'देवान् भावयतानेन' इति प्रजापतिवचनं प्रमाणतयोक्तम् ॥ २१ ॥

१ अत्र, 'रंभाभोगफलं महाक्रतुकृतां स्वर्गे भवेदित्यहो वाचा केचन मोहिता विदधते यागेन वित्तव्ययम् ॥ कन्दर्पाध्वरदीक्षितेन ददता वित्तं स्वपित्रार्जितं कान्ताश्लेषमहोत्सवोऽयमधुना निर्विघ्नमासाद्यते' इति श्लोकोऽनुसन्धेयः । २. ३ ११ ।

अर्जुनः ॥ ततः किम् ॥

कृष्णः ॥ स तया श्रद्धया युक्तस्तस्या[1]राधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान् ॥ २२ ॥

स इति ॥ सः तया श्रद्धया युक्तः सन् तस्य इन्द्रादेः आराधनं तस्याः इन्द्रादिरूपायाः मम तन्वाः राधनं इति वा ॥ ईहते करोति ॥ मयैव विहितान् दत्तान् हितान् काम्यन्त इति कामाः तान् कामान् इष्टफलानि ततः तत्तद्देवतासकाशात् लभते च ॥ २२ ॥

सः मया विवर्धितश्रद्धः तया श्रद्धया सहितः तत्तद्देवताऽऽराधनं करोति । तत्तदाराधनात्फलं लभते किं इति चेत् लभेत तत्तदाराधनात् तत्तद्देवतासकाशात तांस्तान् हि २ तान् कामान् लभते च ॥ शरीरभूतानां अस्वतन्त्राणां देवतान्तराणां फलदाने शक्तिरस्ति किं ते वा देवाः फलं ददति इति चेत् न शरीरभूतानां देवानां फलदाने शक्तिरस्ति ॥ न शरीरं तदवयवाश्च गन्धलेपालङ्करणादिभिराराधकेभ्यः फलं ददति अपि तु शरीरतदवयवाराधनेन तुष्टः शरीरी फलं ददाति ॥ तद्वत् सर्वान्तर्यामित्वात्सर्वशरीरी अहमेव शरीरभूतेन्द्राद्याराधनेन तुष्टः फलं ददामि ॥ आराधिता इन्द्रादयः अनेन मदाराधनं कृतमिति मयि निवेदयन्ति ॥ शरीरभूततदाराधनं मदाराधनं मत्वा फलमहं ददामि ॥ अत एव 'सर्वदेवनमस्कारः केशवं प्रतिगच्छति' ॥ इति स्मर्यते ॥ लोके शेषभूता अवराधिकारिणः स्वाराधनं शेषिभूतमहाराजाराधनतया स्वाज्ञोल्लंघनं तदाज्ञोल्लंघनतया च प्रकाश्य अर्थमनर्थं च प्रापयन्ति ॥ तत्रतत्र स्थितोऽहं तत्तद्द्वारा आराधितः फलं ददामि ॥ अतो न देवतान्तरभजनमकार्यं न च व्यर्थम् ॥ न वा तस्य निन्दा मया कृता ॥ नापि तदनिष्टं मम ॥ २२ ॥

१. द्वै ॥ वि ॥ तस्य इन्द्रादेः आराधनम् ॥ अ ॥ तस्यास्तन्वाः राधनम् ॥
२. वि ॥ हि तान् इति छेदः ॥ द्वै ॥ एकं पदम् ॥ हितान् ॥ इष्टान् । अ ॥ एकं पदम् ॥ हितान् अहितत्वेऽपि हितत्वेन भासमानान् ॥ हि तान् इति पदद्वयं वा ॥

**अर्जुनः ॥ यद्येवं देवतांतरभजनं सफलं तर्हि कथं सुदुष्करानियमानास्थाय देवतांतराणि भजंते मूढा इत्यभिहितं त्वया ॥**

**कृष्णः ॥ अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसां ॥ २२॥ ॥**

**अंतवदिति ॥** अल्पा मेधा बुद्धिः येषां ते अल्पमेधसः तेषां तत् फलं अंतः नाशः अस्यास्तीति अंतवत् तु एव भवति ॥ २२॥ ॥

**न देवतांतरभजनं निष्फलमिति निंदामि ॥ अपि तु देवतांतराणि भजमानानां फलं यत् स्वर्गपशुपुत्रादिकं तत् नाशयुक्तमेव ॥ तादृशं फलं तेषां भवति ॥ अधिकं श्राम्यंति ॥ प्राप्नुवंति च नश्वरं फलं ॥ इत्यनुशयादिदमुक्तं ॥ कुतस्तथा कुर्वन्तीति चेत् अविवेकात् अल्पा बुद्धिस्तेषां ॥ देवतांतरभजनजन्ये अल्पे फले हि तेषां बुद्धिः प्रवृत्ता ॥ अतोऽल्पबुद्धयस्ते ॥ निरतिशयमहाफलानुभवप्रतिबंधकपापवशात् क्षुद्रफलके कर्मणि प्रवृत्तास्ते ॥ उक्तं हि ॥ १ ' कांक्षन्तः कर्मणां सिद्धिं यजंत इह देवताः ' ॥ इति ॥ वक्ष्यते च ॥ २ ' यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ' ॥ इति ॥**

**अर्जुनः ॥ कुतस्तेषामल्पं फलं भवति ॥ आराधितदेवानामल्पत्वादिति चेत् संतु नाम ते अल्पाः ॥ ते हि न ददति फलं ॥ त्वं हि ददासि ॥ महान् खलु त्वं ॥ त्वन्महिमानुगुणं हि फलं तैर्लभ्यम् ॥**

**कृष्णः ॥ देवान् देवयजो यांति मद्भक्ता यांति मामपि ॥ २३ ॥**

**देवानिति ॥** देवान् यजन्तीति देवयजः देवान् यांति ॥ मम भक्ताः मद्भक्ताः मामपि यांति ॥ २३ ॥

**यद्यपि फलं मयैव दीयते ॥ तथापि मन्महिमानुगुणं फलं न ददामि ॥ अपितु आराध्यमानमच्छरीरभूतेंद्रादिदेवतामहिमानुगुणं फलं ददामि ॥ शरीरभूततदाराधनादेव हि मम प्रीतिः ॥ लोके हि शेषभूतावराधिकारिभजनजनित-**

१. ४. १२. २. ९. २०.

तदीयप्रीत्या प्रसन्नाः शेषिणो महाधिकारिणः आराधितावराधिकारियोग्यतानुगुणं फलं ददति ॥ न स्वाधिकारवैभवानुगुणं ॥ तच्च फलं आराधिततत्तदवराधिकारिणां ... कस्यचिदुद्योगस्य प्रापणं ॥ तेच आराधिताधिकारिनिकटे स्वयोग्यतानु... तद्योग्यतानुगुणं न सुखमनुभवन्तो वर्तन्ते ॥ तथा देवानाराधयन्तो देवान् यांति ॥ तेषां लोकान् गत्वा तत्प्रसादात्तन्निकटे सुखेन वर्तते ॥ तच्च सुखं अल्पं नश्वरं च ॥ आराधितदेवतापदानां तल्लोकानां च नश्वरत्वात् ॥ तत्तत्तारतम्यानुगु...न फललाभः ॥ आराधितावयवतारतम्यानुगुणा हि अध्यायिनः प्रीतिर्लोके दृश्यते ॥ साक्षात् त्वामेव भजमानानां कीदृशं फलं ॥ इति चेत् मामेव ये सकामा भजंते ते मत्प्रसादात् मां प्राप्नुवन्ति ॥ मत्प्रसादादिष्टान् कामांश्च प्राप्नुवन्ति ॥ इष्टान् कामान् प्राप्य अनुभूय अंततो मामपि प्राप्नुवन्ति ॥ इंद्राद्याराधकास्तान् केवलं प्राप्नुवन्ति ॥ नतु तेभ्यः परं मां ॥ मदाराधकास्तु तान् प्राप्य अंततो मामपि प्राप्नुवन्ति ॥ निष्कामास्तु मामाराध्य मत्प्रसादात् म... ...त्य मां प्राप्य मन्निकटे सुखेन वर्तन्ते ॥ न पुनर्निवर्तन्ते ॥ मम मल्लोकस्य च कदाऽपि नाशाभावात् ॥ सत्यामिच्छायां सद्य एव अवरान् इंद्रादीनपि प्राप्नुवन्ति ॥ अत एव श्रूयते ॥ [१]स यदि गंधर्वलोककामो भवति संकल्पादेवास्य गंधर्वाप्सरसः समुपतिष्ठन्ते' ॥ इत्यादि ॥ सूत्रं च तथा ॥ [२]संकल्पादेव च तच्छ्रुतेः ॥ इति ॥ [३]'पुरुषार्थोतः शब्दादिति बादरायणः' ॥ इति च ॥ 'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामास्संपद्यन्ते' ॥ [४]'यंयं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् ॥ तंतं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' ॥ इत्याद्याः श्रुतयश्च ज्ञानेन मत्प्राप्तेस्तादृशं महिमानं ब्रुवते ॥ अवरतमप्राड्विवाकाऽऽस्थानेषु केवलं व्यवहरणयोग्याः न तदुत्तमप्राड्विवाकाऽऽस्थानेषु व्यवहर्तुं शक्नुवन्ति ॥ महताऽऽयासेन परमोत्तमप्रधानतमप्राड्विवेकाऽऽस्थानेषु व्यवहर्तुं योग्यतामाप्तवंतस्तु सत्यामिच्छायामवरतमप्राड्विवाकाऽऽस्थानेष्वपि व्यवहरन्तो लोके दृश्यन्ते ॥ उक्तं चेदं ॥ [५]'यावानर्थ उदपान' इत्यत्र ॥ अतः सकामो मामाराध्य मत्प्रसादेन इंद्रादीनां लोकेष्वनुभाव्यान् कामान्

१. छां. ८. २. ६. २. ४. ४. ८. ३. ३. ४. १. ४. मुं. ३. १. १०. ५. २. ४६.

प्राप्य अंततो मामपि प्राप्तुमर्हो दुर्लभः ॥ निष्कामस्तु मामाराध्य मत्प्रसादेन ज्ञानवान् भूत्वा मामेव प्राप्तुमर्हो महात्मा सुदुर्लभः ॥ इति युक्तम् ॥ २३ ॥

अर्जुनः ॥ यदि उक्तरीत्या इंद्रादीन् भजतां अल्पं फलं त्वामेव भजतां महत्फलं तर्हि किमिति सर्वे सकामास्त्वामेवाऽऽराध्य उक्तरूपं इष्टकामावाप्तिपूर्वकत्वत्प्राप्तिरूपं फलं, निष्कामा भूत्वा त्वामाराध्य त्वत्प्रसादेन संकल्पमात्रात्सर्वप्रातिशक्तिजनकत्वत्प्राप्तिरूपं फलं च न प्राप्तुं प्रयतन्ते ॥ पापं प्रतिबध्नाति मद्भजनबुद्धिं इत्युक्तमिति चेत् तर्हि पापं कथं प्रतिबध्नाति ॥ किं वा करोति ॥ पापेन कीदृशा भूत्वा त्वां न भजन्ते ॥

कृष्णः ॥ अव्यक्तं व्यक्तिमापन्नं मन्यते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥

अव्यक्तमिति ॥ न विद्यते बुध्दिः येषां ते अबुध्दयः जनाः मम परं भावं स्वभावं महिमानं वा न जानंतः अजानंतः संतः न विद्यते व्ययः नाशः विकारो वा यस्य सः अव्ययः तं न विद्यते उत्तमं यस्मात् सः अनुत्तमः तं अनुत्तमं न विद्यते व्यक्तं प्राकृतशरीरं यस्य सः अव्यक्तः तं अव्यक्तं मां व्यक्तिं प्राकृतशरीरं आपन्नं प्राप्तं मन्यन्ते ॥ न व्यक्तः प्रकाशः अव्यक्तः अप्रकाशः तं मां व्यक्तिं प्रकाशं आपन्नं जीवं मन्यते ॥ अनुत्तमं अव्यक्तं भावं इति वा ॥ २४ ॥

पापं ज्ञानं प्रतिबध्नाति ॥ पापादविवेकिनो भूत्वा अनितरसाधारणनिरतिशयमहामाहात्म्यसागरं मां इंद्रादिदेवतासाधारणमहिमवंतं मन्यन्ते ॥ ब्रह्मादयः १ प्रकृतिविकारशरीरवंतः ॥ अहं तु न तथा ॥ किंतु अप्राकृतदिव्यमङ्गलविग्रहः ॥ सतिचैवं तानिव मामपि प्राकृतशरीरवंतं मन्यन्ते ॥ यदि ते मम महिमानं जानीयुः तर्हि न मामेवं मन्येरन् ॥ न विजानन्ति महिमानं मम ते ॥ मम स्वरूपं तु उत्तमं स्वापेक्षया उत्तमरहितं केनापि विकारेण रहितं नाशरहितं ॥ २ न जानन्तु

१. दै ॥ २. अ ॥ वि ॥

नच भजन्तु ॥ परमे व्योमनि स्थितं मुक्तैरुपास्यमानं शेषपर्यङ्के शयानं लक्ष्मीपतिं परमपुरुषं त्वां ॥ १ 'परित्राणाय साधूनां' इत्युक्तरीत्या दुष्टनिग्रहशिष्टपरिपालन-धर्मसंस्थापनादिभिर्लोकोपकाराय दयादाक्षिण्यादिशुभगुणगणप्रख्यापनाय च कृता-वतारं लीलामानुषविग्रहं पूतनाप्राणापहारशकटासुरभंजनतृणावर्तवत्सबकाघव्यो-मारिष्टकेशिमुखबहुमुखनिर्हीनभ्रष्टदुष्टजनसंहरणगोवर्धनोद्धरणदावाग्निपानकालिय-फणिफणामण्डलनर्तनयमलार्जुनपातननिजोदरगसकललोकप्रदर्शनादिभिरसकृत्प्र-कटितपरब्रह्मभावं त्वां किमिति न जानन्ति कुतोऽवमन्यन्ते कुतो न भजन्ति इति चेत् पापं तत् अस्मिन्नपि विषये ज्ञानं प्रतिबध्नाति ॥ पापादविवे-किनो भूत्वा सदा प्रकाशमानं लोकहितायावतीर्णं मां परमपुरुषं न जानंति ॥ स्थूलशरीरग्रहणात्पूर्वं अप्रकाशं स्थूलशरीरग्रहणात्प्रकाशं कंचन जीवं मन्यन्ते ॥ मम निरतिशयपरत्वसौलभ्यरूपं स्वभावं न जानन्ति ॥ अतोऽवमन्यन्ते ॥ न भजन्ति च ॥ वक्ष्यते च ॥ २ 'अवजानन्ति मां मूढाः' ॥ इति ॥ उक्तं च ॥ ३ 'न मां दुष्कृतिनो मूढाः' ॥ इति ॥ २४ ॥

अर्जुनः ॥ कुतः पापिभिरविवेकान्न ज्ञायसे ॥ अज्ञानात् तत्र स्थितं अत्रा-वतीर्णं च त्वां न भजन्ते हि ते ॥ यदि तेऽपि भजेयुः तर्हि तदतीव गौरवावहं खलु ते ॥ पापिनः खल्वनेके लोके ॥ त्वां भजन्तः पुण्यवन्तस्तु कतिपये ॥ माम-नेके न भजन्तीति मनःखेदो नास्ति वा तव ॥

कृष्णः ॥ नाहं प्रकाशस्सर्वस्य योगमायासमावृतः ॥
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

नेति ॥ अहं योगयुक्ता माया योगरूपा माया इति वा योगमाया तया समावृतः आच्छादितः योगमायासमावृतः सन् सर्वस्य लोकस्य प्रकाशः न ॥ अतः अयं लोकः मूढः सन् न जायत इत्यजः तं अव्ययं मां न अभि सम्यक् जानाति ॥२५ ॥

१. ४. ८. २. ९. ११. ३. ७. १५.

यदि तत्र स्थितस्य अत्रावतीर्णस्य च मम स्वरूपस्वभावाज्ञानं तेषां स्वतंत्रं स्यात् मदधीनं न स्यात् तर्हि मनःखेदो मम स्यात् ॥ इमे मामज्ञानान्न भजंतीति ॥ न तथा ॥ किंतु तेषां अज्ञानं मदायत्तं ॥ नाहं मम स्वरूपं सर्वस्मै दर्शयामि ॥ अपि तु मदीय[१]सामर्थ्यसहकृतप्रकृत्या तिरस्करण्या आच्छादितस्वरूपो वर्ते ॥ सा हि [२]मत्संकल्पानुविधायिनी त्रिगुणात्मिका मां मत्संकल्पेनाच्छादयति ॥ पापिभ्यो मदीयं स्वरूपं स्वभावं च दर्शयितुं नाहमीहे ॥ अतस्तेभ्यो मत्स्वरूपाच्छादनादज्ञानं मया दत्तं ॥ अतो मदायत्तं तदज्ञानं । तेनाज्ञानेन मत्स्वरूपमज्ञात्वा जननमरणरहितं विकाररहितं च मामवमन्यन्ते ॥ न भजन्ति ॥ अवतीर्णं लोकहिताय मां [३]विविधविचित्रकार्यकरमनुष्यशरीरसंस्थानयोगात् कर्मवशात् मानुषतां प्राप्तं कमपि जीवं मन्यन्ते ॥ अतो न भजन्ते ॥ तेषां मत्स्वरूपाज्ञानस्य तन्मूलकमदवज्ञानादेश्च मदायत्तत्वात् न मम मनःखेदः ॥ न हि लोके स्वेच्छया स्वकार्यसौकर्याय व्यत्यासं प्रापितस्य घटिकायंत्रस्य नवमघंटावादनावसरे दशमघंटावादने मनःखेदो भवति ॥ कुतो मायया स्वरूपमाच्छादयसि इति चेत् शृणु ॥ लोके हि शताधिकभृतिग्राही लब्धाधिकारः पुरुषः स्वशरीरकार्याद्याच्छादनाय कामपि तिरस्करणीं स्वस्य स्वविधेयानां च मध्ये प्रसारयति ॥ अविवेकिनोऽतिपरिचयादवजानीयुरिति स्वदर्शनादेर्दौर्घस्थ्यप्रदर्शनाय ॥ तद्वदहमपि पापादविवेकिनामदर्शनाय मायाख्ययवनिकाऽऽवृतो वर्ते ॥ यथाऽधिकारं दर्शयितुं ॥ उक्तं चेदं ॥ [४]'त्रिभिर्गुणमयैर्भावै'रित्यत्र ॥ २५ ॥

अर्जुनः ॥ मायायवनिकया यदि त्वमाच्छादितोऽसि तर्हि सा यवनिका तेषामिव तवापि ज्ञानं प्रतिबध्नीयात् ॥ ते त्वामिव त्वमपि तान् न विजानीयाः ॥ मध्ये प्रसारितायास्तिरस्करण्या उभयेषां परस्परज्ञानप्रतिबंधकत्वं हि लोके दृश्यते ॥

१. द्वै ॥ योगः सामर्थ्यं तत्सहितप्रकृत्या ॥ २. अ ॥ योगो गुणानां घटना सैव माया योगः संकपः तदधीना माया प्रकृतिः तया वा ॥ ३. वि ॥ 'योगः मनुष्यशरीरसंस्थानसंबंधः तदाख्या माया बिचित्रकार्यकरं वस्तु तया ॥ ४. ७. १३.

कृष्णः ॥ वेदाहं समतीतानि वर्तमानानि चार्जुन ॥
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६॥

वेदेति ॥ हे अर्जुन अहं समतीतानि वर्तमानानि च भविष्याणि च भूतानि वेद जानामि ॥ कश्चन कोऽपि मां नैव वेद जानाति ॥ तुः एवार्थे ॥ २६ ॥

अर्जुन मायायवनिकेयं न मद्ज्ञानं प्रतिबध्नाति ॥ मायाया मदधीनत्वान्न मां सा बाधितुमीष्टे ॥ विचित्रा हि शक्तिस्तस्याः ॥ लोके हि काश्चन यवनिकास्ता-दृश्यो दृश्यन्ते ॥ तादृशयवनिकाच्छादितान् राजदारान् न बहिस्स्थितः कोऽपि पश्यति ॥ पश्यन्ति च राजदारा बहिः स्थितान् यवनिकयाऽऽच्छादिता अपि॥ लौकिकी यवनिकाऽपि तथाविधा दृश्यते ॥ किमुत मदधीना मया प्रसारिता दुरत्यया माया-यवनिका ॥ अतः तस्याः मद्ज्ञानाप्रतिबंधकत्वात् अहं भूतानि वर्तमानानि भवि-ष्यन्ति च वस्तूनि जानामि ॥ मां तु न कोऽपि जानाति ॥ २६ ॥

अर्जुनः ॥ पापिनो मां न भजंतीत्युक्तं त्वया ॥ कथं तत् ॥ यस्मिन् जन्मनि पापं कृतं तस्मिन्नेव जन्मनि शरीरनाशात्तन्नष्टं कथं तत्पापमुत्तरस्मिन् जन्मनि भवद्भजनं प्रतिबध्नीयात् ॥ नहि जननांतरभवं वस्तु परस्मिन् जन्मनि उपभोगाय भवति ॥

कृष्णः ॥ इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ॥
सर्वभूतानि संमोहं सर्गे यांति परंतप ॥ २७ ॥

इच्छेति ॥ हे भारत परंतप अर्जुन इच्छा च द्वेषश्च इच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीति इच्छाद्वेषसमुत्थः तेन द्वंद्व मोहः द्वंद्वमोहः तेन द्वंद्वमोहेन सर्वाणि च तानि भूतानि च सर्वभूतानि सर्गे जननकाल एव संमोहं विपरीतज्ञानं याति ॥ २७ ॥

पूर्वस्मिन् जन्मनि रागद्वेषाभ्यां शीतोष्णसुखदुःखलाभालाभजयापजयमाना-पमानादिद्वंद्वेषु इदमिष्टं इदमनिष्टमित्यभिनिवेशो जायते ॥ तेन अभोग्ये भोग्यता-

बुद्धिः अद्वेष्ये द्वेष्यताबुद्धिः अस्वतन्त्रे स्वातन्त्र्यबुद्धिः इत्यादिरूपो मोहो जायते ॥ तेन तत्प्राप्तिनिवृत्त्यर्थं पापकर्माणि कुर्वन्ति ॥ तेन च पापं जायते ॥ तेन च परमात्मजीवात्मगतसर्वज्ञत्वाल्पज्ञत्वस्वातन्त्र्यपारतन्त्र्यसर्वशक्तित्वाल्पशक्तित्वसुखित्वदुःखित्वमुक्तत्वबद्धत्वरूपद्वंद्वधर्मज्ञानं प्रतिबध्यते ॥ ततश्च विपरीतज्ञानं जायते ॥ तज्जनितवासनावासिता एव जननांतरे जायंते सर्वे प्राणिनः प्रायशः ॥ अतो जननकाल एव मोहवन्तो भवन्ति ॥ स च मोहो बहुलीभूतः क्रमेण पापकर्मसु प्रवर्तयति ॥ तेन पापिनः ते न मां भजन्तीत्येवं क्रमः ॥ इम एव ॥ न मां दुष्कृतिन' इत्यत्रोक्ताः ॥ रागद्वेषाभ्यां कोऽप्यनर्थो भविष्यति मम इति मा शङ्किष्ठाः ॥ भारतः परंतपः खलु त्वं ॥ वंशमहिम्ना कामाद्यंतःशत्रुजयशक्तिमत्त्वेन च तव न कोऽप्यनर्थो भविष्यति ॥ २७ ॥

अर्जुनः ॥ यद्येवं पूर्वपूर्ववासनया सर्वे जननकाल एव मोहवन्तो भूत्वा क्रमाद्बहुलीभूतेन तेन त्वां न भजन्ति ॥ तर्हि कस्यापि त्वद्भजनप्रवृत्तेरभावात् 'चतुर्विधा भजन्ते मा'मिति 'मामेव ये प्रपद्यन्त' इति चोक्तं विरुध्येत ॥ त्वद्भजनतत्प्राप्त्यज्ञानतत्प्राप्त्यमोक्षाणां प्रतिपादकं शास्त्रमनर्थकं संपद्येत ॥ मुक्तिमार्गश्च लुप्येत ॥ कथं ॥ ब्रूहि ॥

कृष्णः ॥ येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् ॥
ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

येषामिति ॥ पुण्यानि कर्माणि येषां ते पुण्यकर्माणः तेषां पुण्यकर्मणां येषां जनानां त पापं अंतं नाशं गतं अन्तगतं नष्टं ते जनाः द्वंद्वमोहेन निः सम्यक् मुक्ताः द्वंद्वमोहनिर्मुक्ताः दृढं व्रतं येषां ते दृढव्रताश्च संतः मां भजन्ते ॥ तु शब्दोविशेषे ॥ २८ ॥

यद्यप्येवं तथाऽपीदं प्रायशः ॥ केचित् अनेकजन्मसमाचीर्णपुण्यविशेषैः क्षीणपापा भवंति ॥ ते भगवद्भजनप्रतिबन्धकपापस्य विनष्टत्वात् अंततः पुण्यवासनाधन्तस्तथैव जायन्ते ॥ केचित् पापवासनया पापवंत एव जनित्वा वासनारूपेणानुगतस्य पापस्य अनुभवेन यादृच्छिकनिर्हेतुकभगवत्कटाक्षलब्धादिव्यदेश-

पुण्यतीर्थदर्शनसेवनसत्संगतदाराधनतदुपदेशादिभिश्च नाशे तैरेव पुण्यकर्मभिर्भग-वद्भजनोन्मुखतां प्रतिपद्यन्ते ॥ उभयेऽप्येते द्वंद्वमोहो यः पूर्वश्लोकोक्तः तेन नि-रवशेषं हीनाः भगवदाराधनेन दुर्लभमिदं जन्म सफलं कर्तव्यं इति दृढसंकल्पाः भगवानेव सर्वदा सर्वथा सेव्यः इति दृढज्ञानाः भगवत्प्रसादजनकव्रतानुष्ठानपराश्च सन्तो भगवंतं मां भजन्ते ॥ इम एव 'चतुर्विधा भजन्ते मा'मित्यत्रोक्ताः ॥ अत एव 'मामेव ये प्रपद्यन्ते' इत्युक्तं ॥ शास्त्रं च सार्थकं ॥ नापि मुक्तेः पंथा लुप्यते ॥ पापिनः पापवासनया पापवंत एव जनित्वा न भजन्ते ॥ तुल्यन्यायेन पुण्यवन्तः पुण्यवासनया पुण्यवंत एव जनित्वा भजंते ॥ पापिनां पापं नष्टं चेत् पुण्यवन्तो भवन्ति ॥ पुण्यवतां पुण्यं नष्टं चेत् पापिनो भवन्ति ॥ [१]कृतं पुण्यं उत्तरस्मिन् जन्मनि अनुगतं तद्विवृद्धये भवतीति [२]'अयतिः श्रद्धयोपेतः' इत्यारभ्य आध्याय समाप्ति षष्ठेऽध्याये सविस्तरं प्रश्नोत्तराभ्यामुपपादनाद्विदितमेव हि ते ॥ स एव न्यायः पापेऽपि ॥ अतो न कोऽपि विरोधः ॥ २८ ॥

अर्जुनः ॥ एवं त्वां भजमानानां किं फलं भवति ॥ मायातरणेन ज्ञानं तेन च मोक्ष इति फलमभिहितं हि मया 'मायामेतां तरन्ति ते' ॥ इति 'ज्ञानवान् मां प्रपद्यते' ॥ इति चाभिहितवता ॥ इति चेत् तच्च ज्ञानं किंविषयकं किंप्रकारकं ॥ तेन च मोक्षः कथं ॥ तद्विविच्य ब्रूहि ॥

कृष्णः ॥ जरामरणमोक्षाय मामाश्रित्य यतंति ये ॥
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ॥
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

जरेति ॥ ये जनाः जरा च मरणं च जरामरणे तयोः मोक्षः अभावः तस्मै जरामरणमोक्षाय मां आश्रित्य यतंति यत्नं कुर्वंति ते कृत्स्नं पूर्णं तत् ब्रह्म अध्यात्मं

१. वि ॥ द्वै ॥ अ ॥ प्रकरणं तत् ध्यानयोगमात्रविषयं ॥ २. ६. ३७.

अखिलं कर्म च अधिभूतं च अधिदैवं च अधिभूताधिदैवे ताभ्यां सहितं साधिभूताधिदैवं अधियज्ञेन सहितः साधियज्ञः तं साधियज्ञं च मां विदुः जानंति ॥ अपि च ये एवं विदुः ते प्रयाणस्य मरणस्य कालः प्रयाणकालः तस्मिन् युक्तं चेतः येषां ते युक्तचेतसः संतः मां विदुः स्मरंति ॥ २९ ॥ ३० ॥

**जरामरणादिसकलदुरितपरिहाराय मदाराधनरूपमुपायमनुतिष्ठतां [१] पूर्णब्रह्मज्ञानं सकलजीवज्ञानं सकलविधकर्मज्ञानं च सम्यक् जायते ॥ अधिभूताधिदैवाधियज्ञसहितं मां च ते जानंति ॥ येषां मद्भजनेन ज्ञानमीदृशं जायते तेषां मनःसमाधानादन्तकाले मदनुस्मरणंजायते ॥ अन्तकाले मां स्मरतां मत्प्राप्तिर्भवतीति वक्ष्यते ॥ २९. ॥ ३० ॥**

**इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे**
**कृष्णार्जुनसंवादे विज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥**

**इतीत्यादि पूर्ववत् ॥ 'ज्ञानं तेऽहं सविज्ञानं' इत्युक्तरीत्या विज्ञानरूपो योगः प्रतिपाद्यतया यस्मिन् सः विज्ञानयोगः इति नाम प्रसिद्धः सप्तमोऽध्यायः इति संपूर्णः ॥**

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते विज्ञानयोगाध्यायार्थप्रदर्शकः सप्तमः प्रतिबिंबः ॥

१. ब्रह्मादिपदानामर्थः प्रश्नोत्तराभ्यां उत्तराध्याये स्पष्टः ॥

श्रीः ॥

# अष्टमोऽध्यायः ॥

संजयः ॥ ब्रह्मादिपदानामभिधेयं विविच्य ब्रूहि इति पृच्छति भगवंतं पार्थः॥

अर्जुन उवाच ॥

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ॥
अधिभूतं च किं प्रोक्तं अधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ॥
प्रयाणकाले च कथं ज्ञेयोऽसि नियताऽऽत्मभिः ॥ २ ॥

किमिति ॥ हे पुरुषोत्तम मधुसूदन कृष्ण तत् ब्रह्म किं ॥ तत् अध्यात्मं किं ॥ तत् अधिभूतं च किं प्रोक्तं ॥ तत् अधिदैवं किं उच्यते ॥ अत्र देहे अधियज्ञः कः ॥ अस्मिन् देहे अधियज्ञः कथम् ॥ प्रयाणस्य मरणस्य काल. प्रयाणकालः तस्मिन् प्रयाणकाले नियतः नियमितः आत्मा मनः येषां ते नियताऽऽत्मानः तैः नियतात्मभिः कथं ज्ञेयः स्मर्तव्यश्चासि ॥ १ ॥ २ ॥

हे पुरुषोत्तम तत् पूर्वाध्यायांते ब्रह्माध्यात्मकर्माधिभूताधिदैवाधियज्ञज्ञानं जायते इत्यभिहितं ब्रह्म किं॥ अध्यात्मं किं॥ कर्म किं॥ अधिभूतं च किं प्रोक्तं॥अधिदैवं किं उच्यते ॥ अत्र देहे अधियज्ञः कथं ॥ अस्मिन् देहे अधियज्ञः कः ॥ अधियज्ञ-शब्देन यज्ञशब्दितविहितकर्मसमाराध्यः कश्चित्प्रतीयते स कः त्वं वा त्वदन्यो

१. द्वै ॥ आत्माधिकाराख्यग्रंथे प्रतिपाद्यं वस्तु किं आत्मानं जीवमधिकृत्य वर्तमानं वस्तु किं इति द्वेधा प्रश्नः ॥ अ ॥ वि ॥ आत्मानमधिकृत्य वर्तमानं किमित्येकधा प्रश्नः ॥

वा ॥ आद्ये अधियज्ञसहितं मामिति कथं तव त्वत्साहित्यं ॥ द्वितीये अधियज्ञत्वं कीदृशं ॥ अंते मत्स्मरणं जायते इत्युक्तं ॥ तादृशविषमसमये मनःसमाधानपूर्वकं त्वत्स्मरणं कथं जायेत ॥ तच्च किमर्थं ॥ तच्च केनोपायेन स्यात् ॥ केन प्रकारेण त्वं स्मर्तव्यः ॥ पुरुषोत्तम मधुसूदन ब्रूहीदमखिलं ॥ पुरुषोत्तमत्वात्सर्वज्ञोऽसि ॥ सर्वज्ञत्वात् सर्वं वक्तुं समर्थोऽसि ॥ मधुसूदनः खलु त्वं ॥ आयाससाध्यं दैत्यहनना दिकं लोकोद्धारार्थं करोषि ॥ मदीयसंदेहापाकरणं तु अनायाससाध्यं ॥ अतो १ ब्रूहि ॥ १ ॥ २ ॥

श्रीभगवानुवाच ॥

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ॥
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतं ॥
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

अक्षरमिति ॥ देहं बिभर्तीति देहभृतः तेषां देहभृतां प्राणिनां वर श्रेष्ठ हे अर्जुन परमं न क्षरं अक्षरं वस्तु ब्रह्म उच्यते ॥ स्वभावः अध्यात्मं उच्यते ॥ २ भूतानि जीवाः भावाः जडानि भूतानि च भावाश्च भूतभावाः तेषां उद्भवं उत्पत्तिं करोतीति भूतभावोद्भवकरः ३ भूतान्येव भावाः वस्तूनि तेषां उद्भवकरः भूतानां भावः सद्भावः वस्तुभावः तस्य उद्भवकरः भावः उत्पत्तिः उद्भवः वृद्धिः भावश्च उद्भवश्च भावोद्भवौ भूतानां भावोद्भवौ भूतभावोद्भवौ करोतीति भूतभावोद्भवकरः भावः सात्विकादिस्वभावः उद्भवः उत्पत्तिश्च तयोः करः ४ भूतभावः मनुष्यादिभावः तदुद्भवकरः विसर्गः ५ परमात्मनो जगत्सर्जनादिव्यापारः ६ देवतोद्देशेन द्रव्यत्यागः ७ रेतस्सेकः कर्म इति

१. अत्र सप्त प्रश्नाः ॥ तत्र षष्ठो द्विरूपः सप्तमस्त्रिरूपः ततश्च दश प्रश्नाः संपद्यंते ॥
२. द्वै ॥ ३. अ ॥ ४. वि ॥ ५. द्वै ॥ ६. अ ॥ ७. वि ॥

संज्ञा अस्य संजाता कर्म ... तः उक्तरूपो विसर्गः कर्म ॥ क्षरो भावः अधिभूतं॥ पुरुषश्च अधिदैवतम् ॥ अहमेव ... देहे अधियज्ञः ॥३॥४॥

द्वे ॥ अक्षरशब्दितानि नित्यानि वस्तूनि अनेकानि ॥ प्रकृतिः जीवाः चेतनप्रकृतिशब्दिता लक्ष्मीः भगवान्नारायणः इति ॥ तेषु रमादिसर्वनियामकत्वेन सर्वोत्कृष्टं नारायणाख्यं वस्तु तद्विजिज्ञासस्व ॥ तद्ब्रह्म ' ॥ इति श्रुत्या ' अथातो ब्रह्मजिज्ञासा ' ॥ इति सूत्रेण च जिज्ञास्यत्वेनोक्तं ब्रह्म ॥ बिंबभूतस्य तस्य प्रतिबिंबभूतः तदधीनः तत्सदृशः सदैकरूपेण भवनात् भावशब्दितः स्वशब्दितः जीवः आत्माधिकाराख्यग्रंथे प्रतिपाद्यमानत्वादध्यात्मं ॥ तस्य जीवस्य उपकारकत्वेन वर्तमानं देहेंद्रियमनोबुद्ध्यादिकं वा आत्मानमुद्दिश्य वर्तमानत्वादध्यात्मं ॥ भूतभावशब्दितानां जीवजडात्मकानां वस्तूनां उत्पत्तिकारणं यद्विष्णोस्तस्य सानेकाविशेषं सर्जनाख्यं कर्म तदिह कर्मेत्युच्यते । सदेहानां जीवानां देहभरणोपयिकगृहकृत्यनिर्वहणोपयोगिनः नाशशीलाः दारापत्यादयो घटपटादयश्च पदार्थाः अधिभूतं ॥ पुरुषः प्रधानो जीवः ॥ निरुपपदशब्देनाभिधानात् ॥ प्रधानं हि वस्तु निरुपपदशब्देनाभिधीयते ॥ प्रधानं ब्रह्मसूत्रं सूत्रमिति ॥ तद्भाष्यं सूत्रभाष्यमिति च निरुपपदशब्देनाभिधीयते ॥ लोकेऽपि प्रधानाः पुरुषास्तथाऽभिधीयंते ॥ तादृशो जीवश्चतुर्मुखः ॥ सः सर्वदेवतापेक्षया उत्तमत्वात् अधिदैवतं ॥ एषु सर्वेषु [1] प्राणिनां देहेषु अंतर्यामितया स्थित्वा तैस्तैः क्रियमाणयज्ञशब्दितमदाराधनभूतसकलसत्कर्मभिराराध्यमानत्वादहमेवाधियज्ञः ॥ न मत्तोऽन्यः ॥ शरीरांतस्थं मद्रूपं अधियज्ञः ॥ तत्सहितश्चाहं ॥ तत्तदाराधनमपि मदाराधनमेव भवति ॥ अतएव ह्युच्यते ॥ ' सर्वदेवनमस्कारः केशवं प्रतिगच्छती 'ति ॥ अर्जुन त्वमेव प्राणिनामुत्तमोऽसि ॥ न त्वत्तोऽन्यः ॥ अहो ते महाभाग्यं ॥ पृच्छसि त्वं स्वैरं विगताऽऽशंकं शंकापनोदाय ॥ न मनागप्युदेति ममामर्षः ॥ जायते च मम परमाऽऽमोदः ॥ समादधे च परमया प्रीत्या ॥ भागधेयमिदमसाधारणं ॥ अतोऽहं ब्रवीमि ' देहभृतांवरे 'ति ॥ ये पुण्यवंतो मां भजंते ते तेन मदाराधनरूपकर्मणा शोधितांतः-

१. देहभृतामितिपदं देहलीदीपन्यायेन देहे इत्यनेन वर इत्यनेन च संबध्यते ॥

करणाः मामेव सर्वकर्मसमाराध्यं ज्ञात्वा विगतान्यभावास्समाराधयंति मां ॥ तेन च आब्रह्मस्तम्बपर्यंततारतम्यज्ञानं जायते श्रवणादिना ॥ ततश्च दारापत्यादीनां नश्वरत्वानुसंधानेन वैराग्यं जायते ॥ ततश्च जगज्जन्मादिकारणत्वादिमहामाहात्म्यज्ञानपूर्वकसुदृढस्नेहरूपा भक्तिरुत्पद्यते ॥ ततश्च तादृशभक्तिपूर्वकं मां भजंते ॥ ततश्च स्वभावब्रह्मशब्दितयोर्जीवपरमात्मनोः प्रकृतिबंधतन्मूलकप्राकृतदेहेंद्रियानुबंधतदभावरूपभेदकविरुद्धधर्मभूतद्वंद्वविषये विधूतमोहगंधं सम्यक्ज्ञानं जायते ॥ वक्ष्यते च ॥ १ 'एतां विभूति 'मित्यादिना २ 'ज्ञानदीपेन भास्वते 'त्यं तेन ॥ तेन च यथावत् ब्रह्मज्ञानं जायते ॥ ततश्च तेषामंतिमप्रत्ययशब्दितमंतिमस्मरणं जायते ॥ तेन च मत्प्राप्तिर्भवतीति पूर्वाध्यायांते समासेनाभिहितं ॥ मया विवृतमिदानीं विस्तरेण ॥ वक्ष्यते च ३ 'बुद्ध्या विशुद्धया युक्त' इत्यादिना ४ ' विशते तदनंतर 'मित्यन्तेन ॥

अ ॥ ब्रह्मेतरस्य सर्वस्य मिथ्यात्वान्नश्वरत्वाच्च अक्षरशब्दितं नाशरहितं सत्यं ब्रह्मैव ॥ तच्च द्विविधं ॥ सगुणं निर्गुणं चेति ॥ तत्र सगुणं गुणसंबंधादपरं ॥ निर्गुणं तु गुणराहित्यात्परमं ॥ तच्च परमं अक्षरं निर्गुणं यत् ब्रह्म तदेव ब्रह्म ॥ तस्य ब्रह्मणः शरीरावच्छेदेन यः क्षेत्रज्ञशब्दितजीवभावः सः देहे विद्यमानत्वादध्यात्मं ॥ वक्ष्यते च ॥ ५ ' क्षेत्रज्ञं चापि मां विद्धी 'ति ॥ सर्वेषां वस्तूनां उत्पत्तेर्वृद्धेश्च कारणभूतः विसर्गशब्दितः देवतोद्देशेन द्रव्यत्यागो दानहोमात्मकः कर्म ॥ उक्तं चेदं ॥ ६ 'अन्नाद्भवन्ति भूतानी 'त्यत्र ॥ प्राणिनामुपकाराय यत् भवति तत् देहेंद्रियादिकं विनाशि वस्तु जातं अधिभूतं ॥ देहेषु तत्तदिंद्रियनियामकानादित्यादीनधिष्ठाय चक्षुरादींद्रियाणां तत्तच्छक्तिप्रदः परमात्मा अधिदैवतं ॥ देहनिर्वर्त्यंयज्ञशब्दितसर्वसत्कर्मणां भोक्ता प्रवर्तकः फलदाता प्रभुश्च परमात्मा तेन रूपेणाधियज्ञः ॥ स चाहमेव ॥ साक्षान्मम सकाशादुपदेशग्रहणाद्देहिनां उत्तमोऽसि त्वं ॥ यज्ञशब्दितसर्वसत्कर्मानुष्ठानरूपकर्मयोगेन शुद्धिरंतःकरणस्य जायते ॥ तया च चक्षुरादींद्रियाणि प्रमथनशीलान्यपि स्वाधीनानि भवंति ॥ ततश्च देहादीना-

१. १०. ७. २. १०. ११. ३. १८. ५१. ४. १८. ५५. ५. १३. ३. ६. ३. १४.

मुपकरणानां नश्वरत्वानुसंधानेन वैराग्यं जायते ॥ ततश्च कायक्लेशद्रव्यव्यय-साध्यहोमदानात्मककर्मानुष्ठानं संपद्यते ॥ ततश्च स्वभावब्रह्मशब्दितयोः जीव-परमात्मरूपयोः सगुणनिर्गुणब्रह्मणोः १ 'तत्त्वम'स्यादिमहावाक्यार्थज्ञानजन्यं ऐक्यज्ञानं जायते ॥ विरुद्धधर्मप्रहाणेन जहदजहल्लक्षणया जीवब्रह्मणोरैक्यानुसं-धानमहिमजनिताभेदभावनार्दांतिमस्मरणं संपद्यते ॥ तेन च मत्प्राप्तिर्भवतीति पूर्वाध्यायांते अभिहितं मया ॥ विवृतमिदानीं विस्तरेण ॥ वक्ष्यते च ॥ 'बुद्ध्या विशुद्धया युक्त' इत्यादिना 'विशते तदनंतर'मित्यंतेन ॥

वि ॥ नाशरहितं प्रकृतिविनिर्मुक्तत्वादुत्कृष्टं ब्रह्मशब्दाभिधेयपरमात्मसाम्या-द्ब्रह्मशब्देनोच्यमानं प्रकृतिसंबंधरहितं कैवल्यार्थिभिरनुसंधेयं तैः प्राप्यं च शुद्धा-त्मस्वरूपं ब्रह्म ॥ तस्मिन्नात्मनि संबध्यमाना तस्य जननमरणाद्यनर्थाऽऽपादिनी प्रकृतिरध्यात्मं ॥ मनुष्यत्वादिसंस्थानोत्पत्तिहेतुभूतः २ 'पंचम्यामाहुतावापः पुरुष-वचसो भवंती'ति श्रुतिसिद्धः योषित्सु पुरुषैः क्रियमाणो रेतस्सेकः कर्म ॥ आकाशादिषु भूतेषु वर्तमानाः ऐश्वर्यार्थिभिरनुसंधेयास्तैः प्राप्याश्च नश्वराः शब्दा-दयः अधिभूतं ॥ ब्रह्मेंद्रादिभोगापेक्षया विलक्षणभोगभोक्ता ऐश्वर्यार्थी प्राप्तैश्वर्यः पुरुषः भोगविषये ब्रह्मेंद्रादिसकलदेवतोपरि वर्तमानोऽधिदैवतं ॥ आराध्यंते चंद्रादयस्तत्रतत्र तैस्तैः ॥ ते चंद्रादयो मम तनवः ॥ शरीरभूतानां तेषामाराधनं शरीरिणो ममाऽऽराधनं भवति ॥ इष्टमतस्तेषां आराधनं मम ॥ उक्तं च मया ॥ ३ 'देवान् भावयते'ति ॥ ४ 'यो यो यां यां तनुं भक्त' इति च ॥ अतः शरीरभूते-ष्विंद्रादिषु स्थित्वा शरीरवाचकैश्चैत्रादिशब्दैः शरीरिवत् तत्तद्वाचकेंद्रादिशब्दैः उच्यमानो यज्ञशब्दिततत्तत्कर्मभिराराध्यमानस्सर्वकर्मणां उद्देश्यभूतोऽधियज्ञः भोक्ता प्रभुश्चाहमेव ॥ नेंद्रादिरन्यः ॥ उक्तं च मया ॥ ५ 'भोक्तारं यज्ञतपसा'-मिति ॥ वक्ष्यते च ॥ ६ 'अहं हि सर्वयज्ञाना'मिति ॥ कथं मम स्यात् ज्ञानरूप-मंतिमस्मरणरूपं चेदं फलमिति माशंकिष्ठाः ॥ सर्वोत्कृष्टतरशुद्धदिव्यदेहवान् किल त्वं ॥ अतस्तवेदं फलं सुलभं ॥ आत्मा स्वरूपतः शुद्धः ॥ तस्य प्रकृति-

१. छां. ६. ८. ७. २. छां ५. ९. १. ३. ३. ११. ४. ७. २१. ५. ५. २९. ६. ९. २४.

बंधोऽनादिः ॥ तेन तत्तद्गुणसंबंधादुत्तममध्यमाधमयोनिषु योषित्पुरुषसंयोग-जन्यरेतस्सेकमूलकशुक्रशोणितमेलनजन्यदेहलाभात्मकं जन्म ॥ तेन च नश्वरेषु देहेंद्रियादिषु दारापत्यादिषु च अहंममेत्यभिमानादनर्थपरंपरा ॥ ततो विलक्षणै-श्वर्यकामनया भगवदुपासनाद्विलक्षणभोगप्राप्तिः ॥ तस्यापि नश्वरत्वानुभवान्नि-र्विण्णस्य कैवल्यकामनया भगवदुपासनात् प्रकृतिबंधरहितशुद्धात्मस्वरूपानुभव-रूपकैवल्यप्राप्तिः ॥ ततस्तदनुभवजनितया परया भक्त्या भगवल्लाभः ॥ इति ज्ञानं जायते ॥ प्रकृतितद्बद्धतद्विमुक्तजीवपरमात्मज्ञानवतोऽतिमस्मरणं ॥ तेन च मत्प्राप्तिर्भवतीति पूर्वाध्यायांतेऽभिहितं मया ॥ विवृतमिदानीं विस्तरेण ॥ वक्ष्यते च ॥ 'बुध्या विशुद्धया युक्त' इत्यादिना 'विशते तदनंतरमित्यं तेन ॥ ३ ॥ ४ ॥

अर्जुनः ॥ अंतिमस्मरणं किमर्थमिति प्रश्नस्य किमुत्तरं ॥ ब्रूहि ॥

कृष्णः ॥ अंतकाले च मामेव स्मरन् मुक्त्वा कलेवरं ॥
यः प्रयाति समद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

अंतकाल इति ॥ यः अंतस्य कालः अंतकालः तस्मिन् च तु मामेव स्मरन् सन् कलेबरं शरीरं मुक्त्वा प्रयाति सः मद्भाव याति ॥ अत्र संशयः नास्ति ॥ ५ ॥

अंतकाले चाहं स्मर्तव्यः ॥ तस्मिन् काले वा मां स्मरतु ॥ ततः प्राक् दारापत्यधनभवनाद्यनुभवजनितसुखलालसतया तत्स्मरणनैरंतर्येण मां स्मर्तुमव-काशानुपलंभात् ॥ अंतकाले च दारापत्यादिभिस्तृणवदुपेक्षितो गेहबाह्यांगणं प्रापितस्तत्र शयानः शोचति ॥ कृतघ्नानिमान् दारापत्यादीनाराध्य पापीयानस्मि संवृत्तः [१] परित्यक्तश्चाहमिदानीं तैः अगतिकश्चास्मीति ॥ गतिश्चास्यामापदि मम

१. अत्र, 'यामाराद्धुं न गणितमिदं जीवनं वा धनं वा यस्याः प्रीतिर्मनसि कलिता ज्यायसी मोक्षतोऽपि ॥ सैवेदानीं वयसि गलिते संप्रहीणे च वित्ते तृणायापि त्रिपुरहर मां मन्यते नैव भार्या '॥

**आपद्बन्धुर्भगवानेवेति निश्चित्यतस्मिन् काले मामेव यः स्मरन् देहं त्यजति ॥ तस्य तेनांतिमस्मरणेन १ मद्भावशब्दितमोक्षप्राप्तिर्भवति ॥ २एतदर्थमंतिमस्मरणं ॥ अत्रार्थे संशयो मास्तु ॥ सत्यं चेदम् ॥ ५ ॥**

**अर्जुनः ॥ अन्ते त्वां स्मरतां त्वद्भावप्राप्तेः को हेतुः ॥**

'दाराः पुत्राः परमसुहृदो बांधवाः किंकरा वा स्वप्नावस्थास्वपि च विरहं ये मया न क्षमन्ते ॥ अद्याऽऽसन्ने तपनतनयस्याऽऽज्ञया दूतवर्गे तेष्वेकोऽपि स्मरहर न मे गन्तुरन्वास्ति जंतुः' ॥ 'कृत्वा पापान्यपि खलु मया पोषिताः शैशवे ये निद्राऽऽहारावपि विजहता शिक्षिता ये कलासु ॥ प्रादुर्भूताः स्वयमिव हि ते प्राक्तनादृष्टलब्धप्रज्ञोन्मेषा इव च तनया न स्मरंत्यात्मनोऽपि '॥ 'गात्रं संकुचितं गतिर्विगलिता भग्ना च दंतावलिः दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ॥ वाक्यं नाऽऽद्रियते च बांधवजनो भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते'॥ 'छाया नोयं वसतिरशनं वाहनं दीपिका वा केतुं यस्मिन् किल न सुलभं किंचिदप्यर्थेषु मर्त्यैः ॥ तस्मिन् दूरे पथि तनुभृतां सर्वथैवाभिगम्ये प्रस्थानार्हं कर्मापितु विधिं घस्मरा न स्मरामः' ॥ गंतव्योऽध्वा सकलदुरवस्थानसंपातभूमिः गत्वा द्रष्टव्यस्त्रिभुवनजनाऽऽयुष्कलांतः कृतांतः ॥ दृष्ट्वा लभ्या निरयजनिता यातनाऽनेकभेदा विस्मृत्येदं निखिलमपितु व्यर्थमायुर्नयामः' ॥ 'क्षुत्तृट्परीतोऽर्कदवानलानिलैः संतप्यमानः पथि तप्तवालुके ॥ कृच्छ्रेण पृष्ठे कशया च ताडितः चलत्यशक्तोऽपि निराश्रयोदके'॥ 'पुत्रादयः कथममी मयि संस्थिते स्युः इत्यप्रतिक्रियनिरर्थकचिन्तनेन ॥ दूये ननु स्वयमहं भवितास्मि कीदृक् इत्यस्ति हन्त गिरिनाथ विमर्शलेशः'॥ 'वृद्धस्य मृतभार्यस्य पुत्राधीनधनस्य च ॥ स्नुषावचनदग्धस्य जीवितान्मरणं वरं' ॥ इत्यादयः श्लोकाः॥ 'ताये तंदें येन्नूं तारम किलै मक्वलेन्नु नोयेपटटोषिदेन' इत्यादिगाथाश्च ॥ इत्यादिकमुदाहर्तव्यम् ॥ १. द्व ॥ मयि भावः स्थितिः मल्लोके मत्समीपे चावस्थानं ॥ अ ॥ मम ब्रह्मणो भावः ब्रह्मत्वम् ॥ वि ॥ ममेव भावः स्वभावः मया परमं साम्यम् ॥ २. वि ॥ मोक्षप्राप्तये अंतिमस्मरणापेक्षा भक्तस्यैव नतु प्रपन्नस्य ॥ प्रपत्तिशब्दिता शरणागतिरन्तिमस्मृतिनिरपेक्षा ॥ इति दाक्षिणाः ॥ प्रपन्नस्यापि अन्तिमस्मरणमावश्यकम् ॥ अपितु तस्य तदयत्नसिद्धमित्यौत्तराः ॥ अ ॥ अंतिमस्मरणं सगुणोपासकानां न निर्गुणोपासकानां इत्याद्यद्वैतमतप्रक्रियाविशेषा 'अग्निर्ज्योति'रिति (८.२४.) श्लोके सविस्तरमुपपादयिष्यन्ते ॥ तत्र द्रष्टव्याः ॥

कृष्ण:॥ यं यं वाऽपि स्मरन् भावं त्यजत्यंते कलेबरं॥
तं तमेवैति कौंतेय सदा तद्भावभाावितः॥ ६ ॥

यमिति ॥ हे कौन्तेय अर्जुन अंते यंयं वाऽपि भावं स्मरन् सन् कलेबरं त्यजति ॥ सः सदा तस्मिन् भावः भावना तद्भावः तेन भावितः संस्कृतः तद्भावः भावितः अभ्यस्तः येन सः तद्भावभावितः सन् तंतमेव भावं एति प्राप्नोति ॥ ६ ॥

लोके अंतकाले जीवः यं यं पदार्थं स्मरन् शरीरं त्यजति सः तत्तद्रूपतां वा तत्तदनुभवौपयिकं जन्म वा तत्तत्समानाऽऽकारतां वा प्राप्नोति॥ इति सामान्यतो न्यायः॥ आथर्वणोपनिषदि चायमर्थः श्रूयते॥ १ 'कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ॥ पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयंति कामाः' ॥ इति ॥ जडभरतापरनामा आदिभरतो राजा हरिणशावमंतकाले स्मृत्वा तत्समानाकारतां प्राप्तः इति भागवते पंचमस्कंधे प्रसिद्धं ॥ अंतिमस्मरणस्य स्मर्यमाणपदार्थसजातीयाऽऽकारतापादकत्वादिकं कथमिति चेत् कस्यचित् पदार्थस्य स्मरणेन मनसि वासनापरनामा कश्चित्संस्कारो जायते ॥ तत्संस्कारसंस्कृतेन मनसा पुरुषरेतोद्वारा योषिद्गर्भं प्रविशतो जीवस्य संस्कारजनकस्मृतिविषयपदार्थाकारसजातीयाकारानुगुणसंनिवेशवान् देह उत्पद्यते॥ एव मन्यदप्यूह्यं ॥ इदं च नैकस्यामवस्थायां॥ नैकस्मिन् देहे वा॥ अपितु अवस्थांतरस्य देहांतरस्य वा प्राप्तावेव॥ अतएव जाग्रति दृष्टश्रुतयोः स्मरणेन स्वप्ने तत्तदापत्तिः ॥ उक्तं च भागवते दशमस्कंधे प्रथमाध्याये॥ 'स्वप्ने यथा पश्यति देहमीदृशं दृष्टश्रुताभ्यां मनसाऽनुचिंतयन्' ॥ इति ॥ स्मरणस्य स्मर्यमाणसजातीयोत्पादकत्वं लोके प्रसिद्धं ॥ बडबायां गर्दभात् स्मर्यमाणतदात्वप्रदर्शितदिव्याश्वसदृशशावकोत्पत्तिः॥ ऋतुस्नातायां वनितायां पत्युः तदात्वदृष्टस्मर्यमाणपुरुषांतरसदृशपुत्रोत्पत्तिश्च दृश्यते॥ एवं अंतकाले २ देवतांतरस्मरणे तत्तत्प्राप्तिः सयुक्तिकमूह्या ॥

१. मुं. ६. २. २. अ ॥ भावं देवताविशेषं ॥

एतादृशमंतिमस्मरणं केनोपायेन स्यात् इति चेत् सदा तद्भावभावितः तस्मिन् अंते स्मरणीये पदार्थे भावना शब्दितेन निरंतरस्मरणेन वासनाशब्दितः संस्कार उत्पद्यते ॥ तेन तदभ्यासेन च अंते स्मरणं भवति ॥ निरंतरस्मरणमंतिमस्मरणोपायः ॥ ६ ॥

अर्जुनः ॥ सति चैवं किं मया कर्तव्यं ॥

कृष्णः ॥ तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ॥
मय्यर्पितमनोबुद्धिः मामेवैष्यस्यसंशयः ॥ ७ ॥

तस्मादिति ॥ तस्मात् सर्वेषु कालेषु मां अनुस्मर ॥ मयि मनश्च बुद्धिश्च मनोबुद्धी अर्पिते मनोबुद्धी येन सः अर्पितमनोबुद्धिः सन् युध्य युद्धं कुरु ॥ मामेव एष्यसि ॥ न संशयः असंशयः ॥ ७ ॥

अंतिमस्मरणार्थं निरंतरं स्मरणस्य कर्तव्यत्वात् सर्वेषु कालेषु त्वयाऽहं स्मर्तव्यः ॥ अन्यथा अंतिमस्मरणं न स्यात् ॥ दर्शनश्रवणादिसकलकर्मकरणकाले तत्तत्कर्मकरणे आत्मनोऽस्वातंत्र्यानुसंधानेन सर्वकर्मणां कारयितारं मां कृष्ण एव सर्वं कारयतीति तत्तत्कर्मकरणानुकूलं स्मर ॥ यथावन्मां ज्ञात्वा ज्ञानी सन् जननमरणादिप्रदः मोक्षप्रदश्चायमिति सततं असंशयो मां स्मर ॥ शरीरेंद्रिय-

१. अत्र, ‘एतावान् सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ॥ जन्मलाभः परः पुंसां अंते नारायणस्मृतिः’॥ इति श्लोकः, ‘वृषगिरिसविधेषु व्याजतो वासभाजां दुरितकलुषितानां दूयमाना दये त्वं ॥ करणविलयकाले कांदिशीकस्मृतीनां स्मरयसि बहुलीलं माधवं सावधाना’ ॥ इति श्लोकः, ‘स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः ॥ धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम् ॥ ततस्तं म्रियमाणं तु काष्ठपाषाणसंनिभम् ॥ अहं स्मरामि मद्भक्तं नयामि परमां गतिं’ ॥ इति श्लोकः, ‘कृष्ण त्वदीयपदपंकजपंजरान्तं अद्यैव मे विशतु मानसराजहंसः ॥ प्राणप्रयाणसमये कफवातपित्तैः कंठावरोधनविधौ स्मरणं कुतस्ते’ ॥ इति श्लोकश्च ॥ ‘अप्पोदैक्किप्पोदे शोल्लिवैत्तेन्’ इति गाथा च अनुसन्धेयाः ॥ (१. ४. १०. १.)

मनसा सुस्थतादशायां मां स्मरतः शरीरविमोक्षणावसरे निवेदितवानयं सुस्थताद्-शायां अंतकाले त्वां स्मारयेति इति स्मृत्वा स्मारयाम्यहं ॥ उक्तं च मया ॥ वराह-पुराणे ॥ 'स्थिते मनसी'ति ॥ यद्यपि अंतिमस्मरणमेव कार्योपादकं न निरंतरस्मरणं॥ तथाऽपि विना निरंतरस्मरणमंतिमस्मरणानुदयात् तदर्थं निरंतरमहं स्मर्तव्यः ॥ लोके हि तत्तत्परीक्षावसरेषु यथावदुत्तरलेखनमेव कार्यसाधकं ॥ तथाऽपि तदानीं यथावल्लेखनशक्तिसंपादनाय निरंतरं पठनपाठनचिंतनलेखनाभ्यासः क्रियमाणो दृश्यते ॥ अंतिमस्मरणपर्यन्तं वेदांततत्वं उपदिश्य मां वेदांतिनमकृतायं कृष्णः नेतःपरं मां युद्धं कुर्विति निर्बध्नीयात् इति हि मन्यसे सर्वज्ञत्वात् सर्व-साक्षित्वात् हृषीकेशत्वेन तत्तदिंद्रियनियामकतया तत्रतत्र स्थितत्वाच्च ज्ञात्वाऽ-यमेवं मनुत इति पार्थ तत्रैव युद्धे त्वं नियोज्यसे ॥ अतो युध्य च अर्जुन एतादृशां-तिमस्मरणजनकज्ञानलाभाय चित्तशुद्ध्यापादकं कर्मैव त्वया कर्तव्यं ॥ तच्च क्षत्रि-यस्य तव युद्धरूपं ॥ तदेव त्वया कर्तव्यं ॥ न कर्मयोगं विना चित्तशुद्धिः ॥ विना चित्तशुद्धिं न ज्ञानं ॥ अंतरेण ज्ञानं नांतिमस्मरणं ॥ अतस्तत्कर्मासंशयं कुरु ॥ उक्तं च मया ॥ १ 'उत्तिष्ठ कौंतेय युद्धाय कृतनिश्चयः' ॥ इति ॥ यद्यपि युद्धं तव स्वधर्मः अनुष्ठेयमतः त्वया इति महता प्रबंधेन सयुक्तिकं सप्रमाणकं अभिहितं त्वया ॥ तथाऽपि नाहं युद्धं कुर्यां तस्य हिंसात्मकत्वात् ॥ इति चेत् मय्यर्पितमनोबुद्धिः ॥ मनसा बुद्ध्या च मयि संन्यस्य तत्कर्म कुरु ॥ न तथा-कृतेन तेन तव दोषो भवेत् ॥ अभिहितं च मया ॥ २ 'मयि सर्वाणि कर्माणी'ति ॥ ३ 'ब्रह्मण्याधाय कर्माणी'ति च ॥ उक्तश्चायमर्थः, ४ 'त्यक्त्वोत्तिष्ठ परंतपे'त्यत्र संबोधनपदे परं मां तप स्मरेत्यर्थविशेषमुक्तवता मया ॥ कृते युद्धे स्याद्वा ममेदं चित्तशुद्ध्याद्यंतिमस्मरणांतं इति चेत् असंशयः युद्धे कृते तेन सत्कर्मानुष्ठानेन चित्तशुद्धिः ॥ तया च मयि५मनोबुद्ध्योरर्पणरूपं निरंतरं मदनुस्मरणं ॥ तेन च अंते तद्रूपमंतिमस्मरणं ॥ तेन च मत्प्राप्तिः तव नियतं भविष्यति ॥ नास्मिन्नर्थे

१. २. ३७. २. ३. ३०. ३. ५. १०. ४. २. ३. ५. 'मय्यर्पितमनोबुद्धि'रित्यस्य देहलीदीप-न्यायेन पूर्वोत्तरयोस्संबंधः ॥

**[1]संशयः ॥ [2]असंशयस्सन् मां प्राप्स्यसि ॥ सत्यमिदं ॥ अत्र ते संशयो माभूत् ॥ ७ ॥**

**अर्जुनः ॥ किमन्यदप्यस्त्यंतिमस्मरणसाधनस्य निरंतरस्मरणस्य साधनम् ॥**

**कृष्णः ॥ अभ्यासयोगयुक्तेन चेतसा [3]नान्यगामिना ॥**
**परमं पुरुषं दिव्यं याति पार्थानुचिंतयन् ॥ ८ ॥**

**अभ्यासेति** ॥ हे पार्थ अभ्यास एव योगः उपायः तेन अभ्यासश्च योगश्च अभ्यासयोगौ ताभ्यां वा युक्तं तेन अन्यत् गच्छतीति अन्यगामि न अन्यगामि नान्यगामि अनन्यगामि वा तेन चेतसा **अनुचिंतयन्** दिवि भवं दिव्यं परमं पुरुषं याति ॥ ८ ॥

**विषयान् प्रति[4] धावमानस्य मनसः पुनःपुनराकृष्य स्मरणीये वस्तुनि स्थापनमभ्यासः [5]स एव उपायः, तेन यत् ध्यानं, तेन सहितं मनस्तत्रैव दृढलग्नं भवति ॥ नान्यत्र गच्छति ॥ तेन मनसा परमाकाशशब्दिते वैकुण्ठे सूर्यमण्डले विद्यमानं जगत्सृष्ट्यादिभिः क्रीडमानं भगवंतं अनवरतमनुस्मरति स्वयोग्यतानुसारेण ॥ तेन चांतिमस्मरणद्वारा तं परमपुरुषं याति ॥ ८ ॥**

**अर्जुनः ॥ कथं त्वं स्मर्तव्य इत्यत्र केन प्रकारेण स्मर्तव्य इति कृतस्य प्रश्नस्य किमुत्तरम् ॥**

१. 'असंशय 'इत्यस्याऽऽवृत्तिः ॥ न संशयः असंशयः॥ अ इति नेत्यर्थकं पृथक्पदं वा ॥ २. बहुव्रीहिः अर्जुनविशेषणं असंशयस्त्वमिति ॥ असंशयो युध्य ॥ असंशयस्स्मर असंशयो मामेष्यसीत्यन्वयः ॥ ३. द्वै अनन्यगामिना ॥ ४. अत्र, 'चेतः का तेचिकीर्षा मुरमथनपदांभोजराजन्मरंदेष्वाकृष्याऽऽकृष्य भूयोऽप्यहितविषयतः सम्यगावेशितं च ॥ धावं धावं परेषं धनभवनतटिल्लोचनास्वेव सक्तं तच्चाप्राप्याऽऽतुरं त्वं किमिति विदधसे मा वृथा पापपात्रम्' ॥ इति श्लोकोऽनुसन्धेयः॥ ५. द्वै॥ अ ॥ अभ्यास एव योगः तेन ॥ वि ॥ अभ्यासयोगाभ्यां युक्तं सहितं तत्र दृढलग्नं वा तेन ॥

**कृष्णः ॥ कविं पुराणमनुशासितारं अणोरणीयांसमनुस्मरेद्यः ॥**

**सर्वस्य धातारमचिन्त्यरूपं आदित्यवर्णं तमसः परस्तात् ॥९॥**

**कविमिति** ॥ कविं सर्वज्ञं पुराणि शरीराणि अणति गच्छतीति पुराणः तं अनुशासितारं नियामकं अणोः अणीयांसं अणुतरं आदित्यस्य वर्ण इव वर्णः यस्य सः आदित्यवर्णः तं तमसः प्रकृतेः अज्ञानात् मृत्योश्च परस्तात् परतः वर्तमानं सर्वस्य जगतः धातारं फलदातारं न चिंत्यं अचिन्त्यं रूपं यस्य सः अचिन्त्यरूपः तं मां यः अनुस्मरेत् सः पुरुषं याति ॥ उपैति वा ॥ ९ ॥

**कविः ज्ञानी सर्वज्ञः अतो निवेदितमर्थं अविस्मरन् स्मरंश्च मां ज्ञात्वा अंतिमदशां स्मारयेदात्मानमिति विश्वासो मयि कार्यः ॥ कथं तत्तदंतिमदशापरिज्ञानादिकं तवेति चेत् अहं सर्वशरीरिशरीरस्थः अतो जानामि तत्तद्दशाभेदान् ॥ यदि जीव इव त्वं शरीरेषु स्थितः स्याः तर्हि दुर्दशा ते महती ॥ एकस्मिन् शरीरे स्थितस्यैव जीवस्य संततदुःखानुभवो दृश्यते ॥ किमुवाच्यं तत्तत्कर्मनिर्मितविविधविचित्रतत्तद्देहेषु स्थितस्य तव इति चेत् अहं तु नियमनाय तत्रतत्र स्थितः ॥ नतु कर्मफलानुभवाय ॥ अतो दुःखापादकदेशे स्थितस्यापि न मे दुःखं ॥ अत एव नरकेषु तत्तत्कर्मफलान्यनुभवतां जीवानामेव दुःखं ॥ न नियामकतया तदंतस्स्थस्य मम ॥ उक्तं च ॥ 'नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते' ॥ इति ॥ लोके तत्तत्कर्मानुगुणं स्वकृतकुकर्मफलानुभवाय कारागृहं प्रवेशितस्य तेन तत्र खिद्यमानस्य तेन च रोरुद्यमानस्य कृतचौर्यादेर्जीवस्यैव तत्र दुःखानुभवः ॥ न तन्नियमनाय तत्राधिकृतानां ॥ नापि तन्नियामकस्य तदातदा तं देशं गत्वा तत्रैवोपविश्य तत्र स्थितीर्विचारयतो महतः प्रभोः ॥ न तान् तं च कारागृहवासादधिक्षिपंति जनाः ॥ एवमहं ॥ अतो न मे दुःखं ॥ सर्वत्र व्याप्तिमतो महतस्तव गजादिशरीरेषु स्थितस्य मशकपिपीलिकादिशरीरांतःस्थितिः कथमिति चेत् अहं अणोरस्सकाशाभितरामणुः ॥ अतः सर्वत्र स्थितिः मम घटते ॥ नियामकतयाऽवस्थानान्न मे दुःखमित्युक्तं ॥ तथाऽपि किमर्थं तत्रा-**

वस्थानं तवेति चेत् सर्वस्य चराचरस्य धारणपोषणकर्ता ह्यहं तदर्थं तत्रावस्थानं मम ॥ यदि देहे स्थितः स्याः तर्हि त्वां देही जानीयात् ॥ नच जानाति ॥ तत्कथं ॥ अहं मदधीनया मायया समावृतोऽस्मि ॥ अतो मां न जानाति ॥ अयमीदृशो वर्तते इति सुतरां १अचिंतनीयोऽहं ॥ उक्तं च मया ॥ २'योगमायासमावृत' इति ॥ ३'मोहितं नाभिजानाती'ति च ॥ ४स्वरूपं च मम अवाङ्मनसगोचरं ॥ श्रूयते च ५'यद्वाचाऽनभ्युदित'मित्यादि ॥ 'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः' ॥ इति च ॥ तच्च रूपं कीदृशमिति चेत् आदित्यस्य रूपमिव मम रूपं ॥ प्रकृतेः अज्ञानात् मृत्योश्च परतोऽहं वर्ते ॥ प्रकृतिबंधतन्मूलकाज्ञानमरणादिरहितोऽहं ॥ मामेवं निरंतरं स्मरतोऽतिमत्स्मरणं भवति ॥ तेन च मत्प्राप्तिर्भवति ॥ अतोऽहमेवं स्मर्तव्यः ॥ ९ ॥

अर्जुनः ॥ किं सर्वेषामयमेक एवक्रमः उत केषां चिदन्योऽपि ॥

कृष्णः ॥ प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ॥
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

प्रयाणेति ॥ प्रयाणस्यकालः प्रयाणकालः तस्मिन् न चलं अचलं तेन मनसा भक्त्या युक्तः योगस्य बलं योगबलं तेन चैव प्राणं भ्रुवोः मध्ये सम्यक् आवेश्य स्थितः सः तं दिव्यं परं पुरुषं उपैति ॥ १० ॥

योगो द्विविधः ॥ राजयोगो हठयोगश्चेति ॥ कर्मतज्जन्यचित्तशुद्धिद्वारा: श्रवणमननध्यानज्ञानादिरूपो राजयोगः ॥ हठयोगस्तु तदशक्तस्य मोक्षेच्छावतः ईषच्छ्रवणादिसहकृतः रेचकपूरककुंभकाख्यैः उपायैः निरुध्य वायुं तस्य मूला-

१. अत्यन्तं अचिन्त्यं अचिन्त्यरूपम् ॥ रूपप्रत्ययः ॥ २. ७. २५. ३. ७. १३. ४. अचिन्त्यं रूपं यस्य तत् अचिन्त्यरूपं ॥ द्वै ॥ चि ॥ ब्रह्मणो दिव्यं रूपमप्राकृतमस्ति ॥ अ ॥ निर्गुणमरूपं सगुणं ब्रह्म रूपवत् ॥ ५. के. १. ४.

धाराद्ब्रह्मरंध्रपर्यंतं १तत्तच्चक्रप्रापणक्रमेण सुषुम्नानाडीपथेन नयनपूर्वकं ब्रह्मरंध्राद्विनिष्क्रमणरूपः ॥ तत्र राजयोगवतां २'बहूनां जन्मनामंते' इत्युक्तरीत्या कालविलंबेन ब्रह्मप्राप्तिः ॥ तज्जन्यं सुखं च परमं महत् ॥ हठयोगवतां तु वायुजयवत्वेन स्वच्छंदोत्क्रमणसिद्ध्यर्हतया शीघ्रं ब्रह्मप्राप्तिः ॥ परंतु तज्जन्यं सुखमल्पं ॥ लोके हि भगवद्गुणवर्णनादिभिरुंछवृत्तिं चरन् तत्रतत्र विलंब्य लभतेऽधिकं फलं ॥ बीभत्सं कर्म कुर्वन्नुंछवृत्तिं चरंस्तु बीभत्सदर्शनचकितैस्तैस्तैः सद्य एव किमपि दत्वा निष्कास्यमानो दृश्यते ॥ राजयोगांगभूतो हठयोगस्त्वन्यः ॥ तत्फलेनैव फलवान् तत्समानयोगक्षेमः ॥ तत्र मोक्षार्थं ये राजयोगमुक्तरूपमनुतिष्ठंति तेषामंतिमस्मरणेन मोक्षप्राप्तिक्रम उक्तः ॥ येतु हठयोगमनुतिष्ठंति तेषामंतिमस्मरणेन मोक्षप्राप्तिक्रमं शृणु ॥ ये हठयोगिनः ते अंतकाले अचंचलेन मनसा भक्त्या च युक्ताः योगबलेन वायुं मूलाधारक्रमेण भ्रूमध्यगचक्रं नीत्वा तत्र निश्चलतया प्रतिष्ठाप्य ३ स्मरंतो ब्रह्म प्रकाशमानं वैकुंठे सूर्यमंडले च वर्तमानं परमपुरुषं यांति ॥ अयं हठयोगिनां क्रमः ॥ हठयोगप्रकारस्तु योगशास्त्रे द्रष्टव्यः ॥ १० ॥

अर्जुनः ॥ उभयेषामपि योगिनां अंतिमस्मरणविषयीभूतं ब्रह्म मह्यं प्रब्रूहि ॥

कृष्णः ॥ यदक्षरं वेदविदो वदंति विशंति यद्यतयो वीतरागाः ॥
यदिच्छतो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये॥ ११ ॥

यदिति ॥ वेदान् विदन्तीति वेदविदः यत् अक्षरं इति वदंति ॥ वीतः गतः रागः येषां ते वीतरागाः यतयः यत्नशीलाः यत् विशंति ॥ यत् इच्छन्तः ब्रह्मणे वेदाय चर्या

१. मूलाधारस्वाधिष्ठानमणिपूरकाऽनाहतविशुद्धाऽऽज्ञासहस्राराऽऽख्यानि सप्त चक्राणि क्रमात् मूलाधारतदुपरिभागनाभिवक्षःकंठभ्रूमध्यब्रह्मरंध्रेषु स्थितानि इत्यादिकं योगशास्त्रात् ज्ञेयम् ॥ २. ७. १९.
३. यः अनुस्मरेत् स तं पुरुषं उपैतीत्यन्वयः ॥

गुरुकलवासः ब्रह्माणि चर्या मनोयोजनं वा ब्रह्मचर्यं चरन्ति अनुतिष्ठंति ॥ पद्यते ज्ञायते इति पदं पद्यते प्राप्यते इति च पदं ज्ञेयं प्राप्यं च तत् ब्रह्म संग्रहेण ते तुभ्यं प्र सम्यक् वक्ष्ये ॥ ११ ॥

वेदवेदार्थतत्वज्ञाः यत् ब्रह्म अक्षरमिति वदंति ॥ वक्ष्यते च ॥ १ 'अव्यक्तोऽक्षर इत्युक्त' इति ॥ वेदज्ञा एव तथा वदेयुः ॥ वेदैरेव वेद्यं तत् ॥ वक्ष्यते च ॥ २ 'वेदैश्च सर्वैरहमेव वेद्य' इति ॥ अत एव ३ 'अथातो ब्रह्मजिज्ञासा' इत्यत्र ब्रह्मणो ब्रह्मणा वेदेन जिज्ञासाशब्दितो विचारः कर्तव्यः इति काचन श्रुतिः ॥ यत्प्राप्तीच्छवः महता प्रयत्नेन रागद्वेषादीन् तत्प्राप्तिप्रतिबंधकान् दोषान् विधूय प्राप्नुवंति ॥ यच्च ज्ञातुं द्रष्टुमिच्छंतो नियमेन ४ गुरुकुलवासं चरंतो ब्रह्मचर्यशब्दितां ५ ब्रह्मज्ञानोपयोगिनीं कांचन ६ चर्यां अनुतिष्ठंति ॥ तादृशं ज्ञेयं ज्ञानप्राप्यं च यत् ब्रह्म तत् तुभ्यं संग्रहेण सम्यग्वक्ष्यामि ॥ कथमहं तत् ब्रह्म ज्ञास्यामीति मा व्यथिष्ठाः ॥ वक्ष्यते चोपरिष्टात् तत्रतत्र तद्ब्रह्म नातिविस्तरेण ॥ ११ ॥

अर्जुनः ॥ तत्र तत्रोच्यमानं श्रुत्वा ब्रह्म ज्ञास्यामि ॥ वायुजयाद्युपायवतां हठयोगिनां अंतिमस्मरणोत्क्रमणब्रह्मप्राप्तिक्रमं ब्रूहि ॥

कृष्णः ॥ सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ॥
मूर्ध्न्याधायाऽऽत्मनः प्राणं आस्थितो योगधारणां ॥ १२ ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ॥
यः प्रयाति त्यजन् देहं स याति परमां गतिं ॥ १३ ॥

१. ८. २१. २. १५. १५. ३. १. १. १. ४. अ ॥ ५. वि ॥ ६. ब्रै ॥ मन आदीन ब्रह्मणि चर्याशब्दितं योजनं च ॥

**सर्वेति** ॥ यः सर्वाणि च तानि द्वाराणि च सर्वद्वाराणि तानि संयम्य मनश्च हृदि निरुध्य आत्मनः प्राणं मूर्ध्नि आधाय योगस्य ध्यानयोगस्य धारणां आस्थितः आश्रितः ओम् इति एकं च तत् अक्षरं च एकाक्षरं ब्रह्म प्रणवात्मकं वेद ब्रह्मप्रतिपादकं ओमित्येकमक्षरं वा व्याहरन् उच्चरन् मां अनुस्मरन् ओमिति एकमक्षर यस्य सः एकाक्षरः तं ब्रह्म मां व्याहरन् अनुस्मरंश्च इति वा तादृशः सन् देहं त्यजन् प्रयाति सः परमां गतिं याति ॥ ११ ॥ १२ ॥

**मनः** यैश्चक्षुरादिभिर्द्वारैर्बहिर्याति तानि सर्वाणि इंद्रियरूपद्वाराणि संयम्य इंद्रियाणि विषयेभ्यः प्रत्याहृत्य इंद्रियैर्विषयान् अस्वीकृत्य इंद्रियेभ्यो विषयान-प्रदर्श्य शरीरांतस्थवायुसंचरणमार्गभूतसुषुम्नेतरनाडीरूपद्वाराणि निरुध्य द्वास-प्ततिसहस्रसंख्याकेषु नाडीभेदेषु वायुमसंचारयन् मनः स्वस्थाने हृदि हृदय-पुंडरीके तदंतस्स्थे संहारकर्तरि नारायणे यथा नान्यत्र गच्छेत्तथा निरुध्य स्वस्य प्राणशब्दितं वायुं सुषुम्नामार्गेण भ्रुवोर्मध्यं नीत्वा ब्रह्म ध्यात्वा वायुं तदुपरि ब्रह्मरंध्रशब्दिते मूर्धभागे सहस्रारचक्रं नीत्वा ब्रह्मणि योगशब्दितं अखंडस्मृति-रूपं मनसोऽवस्थानमाश्रितः सन् ब्रह्मणो वाचकं ओं इति एकमक्षरं उच्चरन् सन् तद्वाच्यं ओं इति एकेन प्रणवाख्येन अक्षरेण वाच्यं यत् ब्रह्म तद्रूपं मां अनुस्मरन् सन् देहं त्यजन् यः प्रयाति सः परमगतिशब्दितं परमप्राप्यं [१]ब्रह्म याति ॥ तच्च ब्रह्माहमेव अतो मां याति ॥ वक्ष्यते च ॥ 'तमाहुः परमां गति'मिति ॥ १२ ॥ १३ ॥

**अर्जुनः** ॥ राजयोगिनां अंतिमस्मरणेन ब्रह्मप्राप्तिरुक्ता ॥ कथं सा मम भविष्यति ॥ असाध्यत्वात् ॥ अतो बिभेमि शोचामि चाहमसाध्यत्वबुद्ध्या ॥

**कृष्णः** ॥ अनन्यचेताः सततं यो मां स्मरति नित्यशः ॥
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥

१. वि ॥ अत्र वक्ष्यमाणे च परमा गतिः प्रकृतिसंबंधरहितः शुद्ध आत्मा ॥ तस्यैव कैवल्या-र्थिभिः प्राप्यत्वात् ॥

अनन्येति ॥ हे पार्थ यः न विद्यते अन्यस्मिन् चेतः मनः यस्य सः अनन्यचेताः सन् नित्यशः सततं यः मां स्मरति नित्यं युक्तः नित्ययुक्तः तस्य नित्ययुक्तस्य योगः अस्यास्तीति योगी तस्य योगिनः तस्य अहं सुलभः ॥ १४ ॥

यो मां अनिवेशयन् मत्तोऽन्यत्र मनः स्मरति यावज्जीवं निरंतरं अनन्यभावेन, तस्य नित्यं मयि मनोयोगवतस्तेन योगेन ज्ञानयोगं प्राप्तस्य अहं अनायासेन अंतिमस्मृतिविषयीभवामि ॥ दययाऽहमंतिमस्मरणमनायासेन तस्योत्पादयामि ॥ उक्तं चेदं मया ॥ तस्मात्सर्वेषु कालेष्वित्यत्र ॥ दत्वा अंतिमस्मरणं परमां गतिं प्रापयामि ॥ अतो माभूत्तव भयं ॥ मा च व्यथा ॥ १४ ॥

वि ॥ ऐश्वर्यं कैवल्यं भगवल्लाभः इति त्रीणि फलानि ॥ तत्र इहामुत्र च विलक्षणविनश्वरमहैश्वर्यानुभव ऐश्वर्यं ॥ प्रकृतिबंधरहितशुद्धात्मस्वरूपानुभवः कैवल्यं ॥ परमं पदं नित्यसूरिभिः मुक्तैश्च सह परब्रह्मणो नारायणस्यानुभवो भगवल्लाभः ॥ तत्र ऐश्वर्यार्थिनां भगवदुपासनाप्रकारस्तत्फलं चोच्यते ॥ 'अभ्यासयोगयुक्तेने'ति 'कविं पुराण'मिति 'प्रयाणकाले मनसे'ति च श्लोकैः ॥ ऐश्वर्यकामनया भगवंतं कवित्वपुराणत्वादिकल्याणगुणविशिष्टत्वेन निरंतरं योऽनुस्मरेत् स तदभ्यासजनितांतिमस्मरणेन तत्समानैश्वर्यो भवति ॥ 'परमं पुरुषं याति' ॥ दिव्यं पुरुषमुपैति' इत्यनयोः परमपुरुषैश्वर्यसमानमैश्वर्यं प्राप्नोतीत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥

कैवल्यार्थिनां भगवदुपासनाप्रकारस्तत्फलं चोच्यते ॥ 'यदक्षरं वेदविद' इति 'सर्वद्वाराणी'ति 'ओमित्येकाक्षर'मिति च श्लोकैः ॥ इंद्रियसंयममनोनिरोधादिभिर्वशीकृताऽऽत्मा यः कैवल्यकामनया प्रणवमुच्चरन् तद्वाच्यं भगवंतं निरंतरं अनुस्मरति सः तदभ्यासजनितांतिमस्मरणेन भगवत्समानाकारमपुनरावृत्तिं शुद्धं आत्मानं प्राप्नोति ॥ 'पदं प्रवक्ष्ये' इत्यस्य, पदशब्दितस्य वेदांतवेद्यस्य भगवतः उपासनाप्रकारं प्रवक्ष्ये इति, 'परमां गतिं याती'त्यस्य परमप्राप्यतया परमगतिशब्दितं भगवत्समानाकारं शुद्धमात्मानं प्राप्नोतीति चार्थः ॥

वक्ष्यते च 'शुद्धस्यात्मनः परगतित्वं' 'तमाहुः परमां गति'मिति ॥ ११ ॥ १२ ॥ १३ ॥

भगवल्लाभार्थिनां मोक्षार्थिज्ञानिशब्दितानां उपासनाप्रकारस्तत्फलं चोच्यते ॥ 'अनन्यचेताः सततं'मिति श्लोकेन ॥ ऐश्वर्ये कैवल्ये च भगवल्लाभादन्यस्मिन् फले मनःप्रवेशरहितो यः नित्ययोगकांक्षया निरंतरं मां स्मरति स योगी तदभ्यासजनितांतिमस्मरणेन भगवंतं मां प्राप्नोति ॥ मत्प्राप्त्युपायान् ज्ञानभक्तिवैराग्यांतिमस्मरणादीनहं ददामि ॥ अतोऽहं तस्य सुलभः ॥ वक्ष्यते च ॥ १ 'तेषां सततयुक्तानां ददामिबुद्धियोगं' इति ॥ २ 'अहमज्ञानजं तमो नाशयाम्यात्मभावस्थ' इति च ॥ ३ 'विवृणुते तनूं स्वा'मिति श्रुतिः ॥ एवमत्र त्रयाणामधिकारिणां उपासनाभेदा उपादेयभेदाः फलभेदाश्च ४ बोद्धव्याः ॥ १४ ॥

अर्जुनः ॥ एवमंतिमस्मरणेन भगवंतं भवंतं प्राप्ताः किं कंचित्कालं स्थित्वा निवर्तंते उत त्वन्निकट एव पुनरावृत्तिरहितास्सुखेन वर्तंते ॥ यद्यपि ५ 'मद्भक्ता यांति मामपी'ति त्वां प्राप्तानां विशेष उक्तः ॥ तथापि तत्र तव त्वल्लोकस्य च नाशाभावात् त्वां प्राप्ता न पुनर्निवर्तंते इत्युक्तं ॥ तव त्वल्लोकस्य च नाशाभावेऽपि त्वां प्राप्तानां तथा स्थातुमनर्हत्वे निवर्तेरन्नपि ते ॥ महांतं प्रभुं प्राप्ता अपि तस्य निरतिशयनिरवधिकप्रभुत्वसत्वेऽपि स्वदोषेण निवर्त्यमाना दृश्यंते लोके ॥ अतो ममेयमुदेति शंका ॥

कृष्णः ॥ मामुपेत्य पुनर्जन्म दुःखाऽऽलयमशाश्वतम् ॥

नाऽऽप्नुवंति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

मामिति ॥ महान् आत्मा येषां ते महात्मानः परमां सिद्धिं परमं फलं मोक्षं

१. १०. १०. २. १०. ११. ३. मुं. ६. ३. ४. अत्र, 'ऐश्वर्याक्षरयाथात्म्यभगवच्छरणार्थिनां ॥ वेद्योपादेयभावानामष्टमे भेद उच्यते' ॥ इति यामुनाचार्यकृतगीतार्थसंग्रहश्लोकोऽनुसंधेयः ॥ ५. ७. २३.

गताः मामुपेत्य स्थिताः दुःखानां आलयः स्थानं दुःखालयः तं न शाश्वतं अशाश्वतं पुनर्जन्म नाऽऽप्नुवंति ॥ १५ ॥

ये महतो ज्ञानयोगादिवर्मंतिमस्मरणेन मां प्राप्ताः १ महानुभावा महांतः खलु ते ॥ अतो निरतिशयं २ सिद्धिशब्दितं मोक्षरूपं फलं प्राप्ताः ॥ नान्यथा ते तत्फलं प्राप्नुयुः ॥ तेषां न पुनरावृत्तिः ॥ हेत्वभावात् ॥ तादृशः प्रभुरहं ॥ तेऽपि तादृशा निर्दोषाः ॥ अतस्ते नश्वरं दुःखानामालयं जन्मशब्दितं देहयोगं ३ पुनः पुनर्जन्मनां दुःखानां चालयं स्थानं च न प्राप्नुवंति ॥ अन्यान् प्राप्तास्तु पुनर्जन्म-दुःखाऽऽलयमशाश्वतं प्राप्नुवंति ॥

अ ॥ ये शुद्धांतःकरणाः प्राप्तसुदृढब्रह्मात्मैकत्वविज्ञानाः अत एव मया पर-ब्रह्मणा एकीभावमुपेत्य उत्तमां विदेहमुक्तिलक्षणां सिद्धिं प्राप्ताः न तेषां पुनर्जन्म ॥ जननमरणादिहेत्वविद्यानिवृत्त्या बीजाभावात् । अत्र मामुपेत्य मल्लोके भोगाननु-भूय मोक्षलक्षणां सिद्धिं गता इत्युक्त्या क्रममुक्तिविषयमिदमिति जानीहि॥ अंति-मस्मरणमप्येतद्विषयमिति स्पष्टीभविष्यति ॥ इति परे ॥

वि ॥ भगवल्लाभार्थिनां कैवल्यार्थिनां च न पुनरावृत्तिः ॥ ऐश्वर्यार्थिनां पुन-रावृत्तिः ॥ इत्येतत्प्रतिपादनायाध्यायशेषः ॥ तत्र 'मामुपेत्य पुनर्जन्म' इत्यादिना 'परस्तस्मात्तु' इत्यतः प्राक्तनेन ग्रंथेन भगवंतं प्राप्तानां न पुनरावृत्तिरिति, 'परस्तस्मात्तु' इत्यादिना तद्धाम परमं ममे'त्यंतेन कैवल्यं प्राप्तानां न पुनरा-वृत्तिरिति, 'पुनरावर्तिनोऽर्जुनेति योगी प्राप्य निवर्तते इति अन्ययाऽऽवर्तते पुनरिति च तत्रतत्र ऐश्वर्यं प्राप्तानां पुनरावृत्तिरिति च प्रतिपाद्यते ॥ सर्वमन्य-देतत्त्रितयोपपादकमिति विवेकः ॥ १५ ॥

अर्जुनः ॥ किं ब्रह्मादीन् महत् पदमधितिष्ठतो महतो देवान् प्राप्ता अपि

१. महान् आत्मा अनुभावो येषां ते ॥ महान् आत्मा मनो येषां ते ॥ महान् आत्मा बुद्धि-र्ज्ञानं येषां ते महांतश्च ते आत्मानश्च ते महात्मानः ॥ २. वि ॥ संसिद्धिरूपं मां ॥ ३. अ ॥ पुन र्जन्मदुःखाऽऽलयमित्येकं पदम् ॥

पुनरावर्तंते ॥ देवान् प्राप्ताः पुनरावर्तंते इ 'त्यंतवत्तु फलं तेषा 'मित्यत्र यद्यप्युक्तं ॥ तथाऽपि तत्र देवानिति सामान्यशब्दप्रयोगेण सामान्यदेवान् प्राप्तानां पुनरावृत्तिसत्वेऽपि विशिष्टान् ब्रह्मादीन् जगत्स्रष्टृत्वादिमहामहिमवतो महतो देवान् प्राप्तानां पुनरावृत्तिर्न स्यात् इति भाति ॥ अतो 'मामुपेत्ये 'ति कथं विशिष्योच्यते ॥ परिहरेमां मे शंकाम् ॥

कृष्णः ॥ आब्रह्म१भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

**आब्रह्मेति**॥ हे अर्जुन ब्रह्मणः भवनं गृहं ब्रह्मभवनं तस्मात् आ ब्रह्मभवनात् ब्रह्मसदनपर्यंतं विद्यमानाः लोकाः भुवनानि जना वा पुनः आवर्तयंति आवर्तंते वा इति पुनरावर्तिनः ॥ हे कौन्तेय मां उपेत्य तु एव पुनर्जन्म न विद्यते ॥ १६ ॥

हे अर्जुन ब्रह्मलोकपर्यंतं स्थिताः २ जनाः पुनरावर्तंते ॥ ब्रह्मलोकपर्यंतं स्थिताः लोकाः आगतान् पुनरावर्तयंति ॥ ब्रह्मादीनां तल्लोकानां च महामहिमवत्वेऽपि बद्धत्वात् प्रकृतिविकारत्वाच्च नाशसत्वेन तान् प्राप्तानामपि ३ पुनरावृत्तेर्युक्तत्वात् ॥ अहंतु तदपेक्षया विशेषवान् ॥ सच तु शब्देन सूचितः ॥ 'परस्तस्मात्तु भावोऽन्य' इत्यादिना 'तद्धाम परमं ममे 'त्यंतेन वक्ष्यते ॥ तादृशं मां प्राप्तस्यैव पुनर्जन्म न विद्यते ॥ ४ 'नच पुनरावर्तंते नच पुनरावर्तंते' इत्यादिश्रुतेः ॥ वक्ष्यते च ॥ 'यं प्राप्य न निवर्तंते' इति ॥ 'यद्गत्वा न निवर्तंते' इति 'सर्गेऽपि नोपजायंते प्रलये न व्यथंति चे 'ति च वक्ष्यते ॥ स एव पुनर्जन्म न ५ प्राप्नोति नान्यान् ६ प्राप्तः ॥ स्वतो वंशतश्च शुद्धस्त्वं मामेव प्राप्य पुनर्जन्म नाप्स्यसि ॥ किंवा त्वं

१. भवनादिति पाठान्तरं ॥ २. लोकाः जनाः लोकाश्च ॥ पुनरावर्तंते पुनरावर्तयंति चेति पुनरावर्तिनः ॥ ३. अत्र 'राज्यं सुराणामपि चाधिपत्य '(२. ८.)मिति ॥ 'मद्यम्त्यजंति वरदे '(३३. पुटे)ति ॥ अन्ये चैवंप्रकाराः श्लोकाः अनुसंधेयाः ॥ ४ छां. ८. १५. १. ५. विदधातुः प्राप्त्यर्थकः सकर्मकोऽपि ॥ ६. द्वु ॥ भाष्यतात्पर्यतट्टीकाविवृत्यादिषु विशेषोऽत्र द्रष्टव्यः ॥ सच, यद्यपि जनतपःसत्यवैकुंठेषु स्थितानां न पुनरावृत्तिः ॥ तथाऽपि जनादिषु त्रिषु स्थितानां अंशेन पुनर्जनिसत्वात् अंशेनापि पुनर्जन्माभावाभिप्रायेण 'मामुपेत्य पुनर्जन्म न विद्यते ' इति विशिष्योक्तं ॥ वैकुंठं

प्राप्तान् पुनरनावर्त्य स्वांतिक एव सुखेनावस्थापनपूर्वकतद्रक्षणसमर्थं तव प्रभुत्वं ॥ कथं त्वामीदृशं महामहिमवंतं प्राप्नोति मादृशो लोकः इति चेत् १ लक्ष्म्याः पतिरहं ब्रह्मादयस्तत्कटाक्षेणैव स्वं २ स्वं पदं प्राप्ताः ॥ ३'यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधा'मिति श्रुतेः ॥ साच निखिलस्य जगतो मातृत्वान्मत्प्रेयसीत्वेनाऽऽराधिता मां प्रापयेत् ॥ अतोऽहमीदृशस्सर्वथा सर्वदा सेव्यः अंतिमस्मरणेन प्राप्यश्च ॥ १६ ॥

अर्जुनः ॥ कुतो ब्रह्माणमपि प्राप्तानां पुनरावृत्तिः त्वां प्राप्तानां केवलं न सा ॥ कस्तव ब्रह्मणश्च विशेषः ॥ संतुनाम इंद्रादयोऽवराः ॥ ब्रह्मणो विषये ब्रूहि ॥

कृष्णः ॥ सहस्रयुगपर्यन्तं अहर्यद्ब्रह्मणो विदुः ॥
रात्रिं युगसहस्रांतां तेऽहोरात्रविदो जनाः ॥ १७ ॥

सहस्रेति ॥ अहश्च रात्रिश्च अनयोः समाहारः अहोरात्रः तं विदन्ति जानंति इति अहोरात्रविदः ते जनाः ब्रह्मणः अहः यत् तत् सहस्रं च तानि युगानि च सहस्रयुगानि

गतस्य मुक्तत्वान्नांशेनापि पुनर्जनिः ॥ जनादिषु त्रिषु स्थितस्य अमुक्तत्वादंशेन पुनर्जनिरस्ति इत्यादिरूपः ॥ १. मां इत्यस्य, मा लक्ष्मीः तया सहितं अशब्दवाच्यपरब्रह्मभूतमित्यर्थः ॥ 'अ इति ब्रह्मे'ति श्रुतिः ॥ विश्वपाशब्दवदाकारांतोऽयं माशब्दः ॥ २. अत्र, 'यस्याःकटाक्षमात्रेण ब्रह्मरुद्रेन्द्रपूर्वकाः ॥ सुराः स्वीयपदान्यापुः सालक्ष्मीर्मे प्रसीदतु'॥ इति, 'ब्रह्मादयो बहुतिथं यदपांगमोक्षकामास्तपस्समचरन् भगवत्प्रपन्नाः ॥ सा श्रीः स्ववासमरविन्दवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता' ॥ (भाग. १. १६.) इति, 'योमृग्यते हस्तगृहीतपद्मया श्रियेतरैरंग विमृग्यमाणया' ॥ (भाग. ८. ८) इति, विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमाऽऽवृतिबंधमोक्षाः ॥ यस्या अपांगलवमात्रतः' (द्वा. ७.) इति च श्लोकाः श्रीगुणरत्नकोशश्रीस्तवश्रीस्तुतिस्थाश्च श्लोकाः अनुसंधेयाः ॥ 'इवल्तायाय्' (मुमुक्षुप्पडि) 'सर्वस्वामिनियाय्' (रहस्यरत्नावली) इत्यादिवाक्यानि च अनुसंधेयानि ॥ ३. ऋ. १०. १२५. ५.

सहस्रयुगैः पर्यंतः पर्यवसानं यस्य तत् सहस्रयुगपर्यंतं विदुः जानन्ति ॥ युगानां सहस्राणि युगसहस्राणि युगसहस्रैः अंतः पर्यवसानं यस्याः सा युगसहस्रांता तां रात्रिं च विदुः ॥ १७ ॥

मनुष्याणां यद्वर्षं तद्देवानां अहोरात्रः तादृशैः अहोरात्रैः पक्षमासादिकल्पनया वर्षाणां द्वादशभिः सहस्रैश्चतुर्युगं भवति ॥ तादृशानां चतुर्युगानां सहस्रं ब्रह्मणोऽहः ॥ तावती रात्रिः ॥ ब्रह्मणोऽहर्यत् तस्य १ चतुर्युगसहस्रैः पर्यवसानं ॥ तथा २ तस्य रात्रिर्या तस्या अपि चतुर्युगसहस्रैः पर्यवसानं ॥ ईदृशोऽहोरात्रस्तस्य ॥ ईदृशैः त्रिंशता अहोरात्रैः मासः ॥ तादृशैर्द्वादशभिः मासैरेकं वर्षं ॥ तादृशानां वर्षाणां शतं ब्रह्मणः३ श्चतुर्मुखस्याऽऽयुः ॥ तस्य परमिति नाम ॥ तस्य च प्रथमद्वितीये द्वे अर्धे ॥ तस्य चेदानीं द्वितीयमर्धं ॥ अत एव द्वितीयपरार्धे इति संकल्पयंति ॥ 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते' ॥ इति, 'वैदिकानां युगानां च सहस्रपरिसंख्यया ॥ ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेवचे'ति, निजेन तस्य मानेन आयुर्वर्षशतं स्मृतमिति च स्मृतयः ॥ इमां ब्रह्मणोऽहोरात्रव्यवस्थां न सर्वे जानंति ॥ किंतु ये मनुष्यादिचतुर्मुखांतानां अहोरात्रव्यवस्थाविदो महांतः त एव जानंति वदंति च ॥ अतो ब्रह्मण ईदृशवर्षशतरूपजीवितकालव्यवस्थावत्त्वेन नश्वरत्वात्तस्य लोकोऽपि तथा ॥ किमु वाच्यमन्ये देवास्तल्लोकाश्च नश्वरा इति ॥ मम मल्लोकस्य च परं कालव्यवस्थानियमितत्वाभावेन न नाशप्रसक्तिः ॥ उक्तं च महाभारते मोक्षधर्मे ॥ 'नित्यं हि नास्ति जगति भूतं स्थावरजंगमं ॥ ऋते तमेकं पुरुषं वासुदेवं सनातन'मिति ॥ अतो मामुपेत्येति विशिष्योक्तं युक्तं ॥ अत्र ब्रह्मण एव हि कालव्यवस्थावत्त्वेन विनाशित्वमुक्तं ॥ तेन तल्लोकस्य विनाशित्वं कथं सेत्स्यति इति चेत् 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिन' इति पूर्वमुक्तत्वात् ॥

१. युगशब्दश्चतुर्युगपरः ॥ प्रमाणांतरात् ॥ २. यदित्यस्य यथेत्यर्थात् ॥ ३. ब्रह्मशब्दश्चतुर्मुखब्रह्मपरः ॥

पुनस्सर्जनमनुमन्येतेति चेत् अवशः खलु सः ॥ सतु सृज्यमानो न स्वतंत्रः ॥ किंतु तत्तत्कर्मानुगुणं तासुतासु योनिषु तांस्तान् सृजतः अशब्दवाच्यस्य भगवतो वशः ॥ अतः स पुनःपुनस्सृज्यते संह्रियते च ॥ अत उक्तं युक्तम् ॥ १९ ॥

द्वै ॥ वि ॥ चतुर्मुखस्याहोरात्र ईदृशः ॥ तदन्हि सर्वेषां जन्मनाशौ ॥ तदहरवसाने सृष्टस्य सर्वस्य जगतो लयः ॥ इत्युक्तं ॥ तेन चतुर्मुखस्य सृष्टिलयौ नेति भाति ॥ ततश्च तस्य नित्यत्वात् 'आब्रह्मभवनाल्लोका' इत्युक्तमयुक्तं इति चेत् एवं ॥ [1] अनेकेषां चतुर्युगानामनेकैः[2] स्सहस्रैश्चतुर्मुखायुरात्मकैः पर्यवसानं [3] परब्रह्मणो भगवतो नारायणस्य यदहस्तस्य ॥ तथा तस्य या रात्रिस्तस्याश्च ॥ परब्रह्मण ईदृशमहः ईदृशी रात्रिः ॥ तस्य परमनित्यत्वेन कालक्लृप्त्यभावेऽपि सव्यापारनिर्व्यापारावस्थयोः प्रसिद्धाहोरात्रसाम्यात् तत्त्वेन व्यपदेशः ॥ 'अनेकयुगपर्यंतं अहर्विष्णोस्तथा निशा ॥ रात्र्यादौ लीयते सर्वमहरादौ च जायते ॥ नित्यस्यापि हरेः कालो द्विपरार्धात्मकः स्वयं ॥ अहश्चासौनिमेषश्च यत्प्रवृत्त्योपचर्यते' ॥ इत्यादिप्रमाणप्रमितभगवदहोरात्रविद एवं जानंति वदंति च ॥ १७ ॥

तस्य परब्रह्मणोऽहरागमे [4] सृष्ट्यादिकाले यथावत्सर्वप्रमाणागोचरत्वादव्यक्तशब्दवाच्यात् परब्रह्मणो नारायणात् गुणत्रयमहदहंकारभूतदेहेंद्रियमनोबुध्यादीनि जडानि ब्रह्मरुद्रेंद्रादयो जीवाश्चोत्पद्यंते ॥ तानि ते च स्वस्वकारणे लयमापद्यांततोऽव्यक्तशब्दिते भगवति लीयंते रात्रिशब्दितमहाप्रलयारंभे ॥ १८ ॥

यद्येवं ब्रह्मादीनां सर्वेषां परब्रह्मणोऽहरागमे सृष्टिः तस्य राज्यागमे प्रलयश्च ॥ तर्हि परस्मिन्नहनि प्रारब्धफलानुभवाय सृज्यमानानां अवराणां विषये पूर्वोक्तदोषत्रयस्य तादृशानामुत्तमानां विषये प्रथमद्वितीययोरप्रसक्त्या तृतीयस्य दोषस्य च प्रसक्तिरिति चेत् [5] ब्रह्मादिर्भूतग्रामः अहरागमे प्रभवति ॥ भूत्वाभूत्वा राज्यागमे प्रलीयते ॥ पुनरहरागमे प्रभवति ॥ पुनः प्रलीयते राज्यागमे ॥ ततो न तेषां दोषाणां प्रसक्तिः ॥ परस्मिन् दिने मुक्तिं गमिष्यतो ब्रह्मणो विषये तृतीयदोषस्य तेन सह मुक्तिं गमिष्यतां अवराणां विषये

१. युगशब्दोऽनेकचतुर्युगपरः ॥ २. सहस्रशब्दोऽनेकसहस्रपरः ॥ ३. ब्रह्मशब्दः परब्रह्मपरः ॥ ४. अहोरात्रिशब्दौ परब्रह्माहोरात्रवाचकौ ॥ अहः ब्रह्मकल्पः रात्रिर्महाप्रलयः ॥ ५. अतद्गुणसंविज्ञानः ॥ ब्रह्मान्वः भूतग्रामः इत्यर्थः ॥

दोषत्रयस्य उत्तमानां विषये तृतीयदोषस्य च प्रसंग इति चेत् यो ब्रह्मा स भूत्वा प्रलये प्रलीयते ॥ यश्च परस्मिन् दिने मुच्यमानो जीवसमुदायः स भूत्वा भूत्वा प्रलये प्रलीयते ॥ परदिनारंभे प्रभवति प्रकर्षेण प्रकृतिबंधविनिर्मुक्तस्वरूपेण भवति॥ मुक्तासाधारणसकलप्राभववांश्च भवति ॥ पूर्वब्रह्मकल्पस्थितस्यैव ब्रह्मणस्तदन्य-जीवसमुदायस्य च मुक्तत्वात् न तेषां दोषाणां प्रसंगस्तद्विषये ॥ मुक्तानामपुनरा-वृत्त्या ब्रह्मरुद्रेंद्रादीनां प्रतिब्रह्मकल्पमवस्थानं कथं ॥ अन्य एवेमे इति चेत् तर्हि तान्येव नामानि कथमिति चेत् अन्य एवेमे नामरूपादिकं तु समानं ॥ तथाच सूत्रं ॥ १ 'समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधः' ॥ इति ततश्च चतुर्मुखस्यापि सृष्टिप्रलयवत्वात् 'आब्रह्मभवनाल्लोकाः पुनरावर्तिन' इति युक्तमुक्तं ॥ अत एव २'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथे'ति सर्वस्रष्टृत्वं सर्वसंहर्तृत्वं चोक्तं मम मया३ ॥ १९ ॥

अर्जुनः ॥ ब्रह्मणः परब्रह्मणा तदन्येषां च तेन प्रभवप्रलयवत्वादनित्यत्वेन युक्तमुक्त 'माब्रह्मभवनाल्लोका' इतीति सम्यगुपपादितं ॥ त्वां त्वल्लोकं च प्राप्तानां याऽसावपुनरावृत्तिरुक्ता, तुशब्दसूचितविशेषरूपहेतूक्त्या तामुपपादय ॥

कृष्णः ॥ परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ॥
यस्स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

पर इति ॥ न व्यक्तः अव्यक्तः सनातनः अनादिः तस्मात् अव्यक्तात् व्यक्ताद्वा परः अन्यः भावः सः तु ॥ यः सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

चक्षुरादींद्रियागोचरत्वादव्यक्तशब्दितः ४'न संदृशे तिष्ठति रूपमस्य'॥ ५'न तत्र चक्षुर्गच्छति' ॥ इत्यादेः ॥ सदैकरूपोऽनादिः' ६ व्यक्तशब्दितादुक्तरूपाद-नित्याच्चतुर्मुखादेः सर्वस्मात् प्रपंचात् चेतनाचेतनात्मकात् तद्धेतुभूतायाः प्र[illegible]

१. १. ३. ३०, २. ७. ६. ३. श्लोकत्रये द्वैतविशिष्टाद्वैतमतप्रक्रिययोरवांतरविशेषाः [illegible] तद्ग्रन्थतोऽवसेयाः ॥ ४. ना. १. ५. के. १. ३. ६. द्वै ॥ व्यक्तात् ॥ [illegible] ॥ अव्यक्तात् ॥

भिन्नः सतो विलक्षणः तुशब्दसूचितोक्तरूपविशेषवान् १ अनादिरूपभाविभक्तो यः परमात्मा स सर्वेषु भूतेषु चेतनाचेतनात्मकेषु उक्तरीत्या दिनप्रलये महाप्रलये च नाशं प्राप्तेष्वपि ब्रह्मादीनामायुर्व्यवस्थापकस्य कालस्यापि नियामकतया कालकृत्यभावेन नित्यत्वात् न नाशं प्राप्नोति ॥ उक्तं च भागवते ॥ २ 'भवानेकः शिष्यते शेषसंज्ञः' ॥ इति ॥ अधिष्ठानभूतप्रपंचनाशे तदंतर्गतस्य भगवतो नाशः स्यादिति चेत् भगवान् सर्वत्र व्याप्त. ॥ तस्य तस्य वस्तुनो नाशे तदवच्छिन्नरूपस्य व्याप्तरूपे अनुप्रवेशः ॥ उपाधिनाशे घटाकाशस्य महाकाशे यथा ॥ तेन रूपेणादर्शनं प्राप्नोति ॥ ३ आत्यंतिकं नाशं न प्राप्नोति ॥ अतएव विशेषात् 'मामुपेत्य पुनर्जन्म ने'त्युक्तं ॥ यदि परमात्मा अव्यक्तः स्यात् तर्हि कस्यापि तदपरोक्षसाक्षात्कारैकहेतुकमोक्षासंभवेन तत्फलकशास्त्रपुराणादीनामानर्थक्यप्रसंगःइति चेत् न सर्वात्मना अव्यक्तः परमात्मा ॥ किंतु तत्प्रसादेन व्यक्तो भवति ॥ विना तदनुग्रहं शतेनापि प्रयत्नानां न दृश्येत ॥ अतएव ४ 'मोहितं नाभिजानाति मां' ५ 'योगमायासमावृतः' इत्यव्यक्तत्वमुक्त्वा ६ 'मायामेतां तरंति ते' इति प्रसादेन व्यक्तत्वमुक्तं ॥ भगवान् व्यासोऽपि ७ 'तदव्यक्तमाह ही'त्यव्यक्तत्वमुक्त्वा ८ 'अतोऽनंतेन तथाहि लिंग'मिति प्रसादेन व्यक्तत्वमाह ॥ ९ 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतिरप्येवमाह ॥ २० ॥

कृष्णः ॥ अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिं ॥
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

अव्यक्त इति ॥ सः न व्यक्तः अव्यक्तः न क्षरः अक्षरः इत्युक्तः ॥ यं प्राप्य न निवर्तन्ते ॥ तं परमां गतिं आहु. ॥ तत् मम परमं धाम ॥ २१ ॥

१. द्वै ॥ अयं च भावशब्दार्थः ॥ 'सृष्टिः स्थितिश्च संहारो भावनं समुदाहृतम् ॥ तद्यः करोति पुरुषः स भाव इति कीर्तितः ॥' इति वचनात् ॥ भावयतीति भाव इति व्युत्पत्तिः ॥ अ ॥ वि ॥ भावः पदार्थः ॥ २. भाग. १०. ३. ३. न विनश्यति विशेषेण न नश्यति इत्यर्थः॥ इति भावः॥ ४. ७. १३. ५. ७. २५. ६. ७. १४. ७. ३. २. २३. ८. ३. २. २७. ९. का. २. २३.

अव्यक्तत्वात् मायाभावाच्च अव्यक्तः अक्षरः इति श्रुतिपुराणादिषूक्तः अतः 'स एव परमप्राप्यः ॥ तं परमात्मानं प्राप्य स्थिता न निवर्तंते ॥ यं प्राप्य न निवर्तंते १ तं हि परमां गतिं वदंति ॥ तादृशं च सर्वोत्तमं वस्तु मम स्वरूपमेव ॥ २ अहमेव स इति बुध्वा मामाश्रय ॥ मां प्राप्तानां तु न पुनरावृत्तिः ॥ उक्तादेव विशेषात् ॥ २१ ॥

वि ॥ अर्जुनः ॥ भगवंतं त्वां प्राप्तानां पुनरावृत्तिर्नैत्यभिहितं ॥ 'यदक्षरं वेदविद' इत्यादिना श्लोकत्रयेण निरूपितं शुद्धात्मप्राप्तिरूपं कैवल्यं प्राप्तानां पुनरावृत्तिरस्ति वा न वा ॥ तच्च शुद्धात्मरूपं कीदृशं ॥ तत् किं स्वतंत्रं ॥ उत तव शेषभूतम् ॥

कृष्णः ॥ श्लोकद्वयं शुद्धाऽऽत्मविषयं ॥ तत्तत्कार्यसहितेषु आकाशादिषु भूतेषु भौतिकेषु शरीरेषु च नश्यत्स्वपि तेषु स्थित आत्मा न नाशं प्राप्नोति ॥ आत्मनो नित्यत्वात् ॥ उक्तं च ॥ ३ 'न हन्यते हन्यमाने शरीरे' ॥ इति ॥ २० ॥

स एव शुद्धाऽऽत्मा अव्यक्तः अक्षर इति तत्रतत्रोक्तः ॥ वक्ष्यते चात्रापि ॥ ४ 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते' ॥ इति, 'कूटस्थोऽक्षर उच्यते' इति च ॥ स एव परमप्राप्यः ॥ स एव 'स याति परमां गति'मित्यत्र परमगतिशब्देनोक्तः ॥ तमात्मानं प्राप्य न निवर्तंते ॥ यं भावं प्राप्य न निवर्तंते स एव हि परमा गतिः ॥ उक्तश्चायमात्मा ५ 'गच्छंत्यपुनरावृत्तिं' इत्यत्र पुनरावृत्तिरहितत्वेन ॥ यद्ययमात्मा ईदृशमहामहिमवान् स्यात् तर्हि स्वतंत्रोऽपि स्यात् ॥ ततश्च तव सर्वनियामकत्वं न स्यात् ॥ इति चेत् ईदृशं यत् शुद्धात्मरूपं तत् मम परमं नियमन६स्थानं ॥ प्रकृतिरेकं नियमनस्थानं ॥ तत्संसृष्टो बद्धाऽऽत्मा अपरं नियमनस्थानं ॥ प्रकृतिबंधविनिर्मुक्तो७मुक्ताऽऽत्मा परं नियमनस्थानं ॥ तेषु त्रिषु नियम्येषु प्रकृतितत्संसृष्टजीवापेक्षया मुक्त उत्तमो नियम्यः ॥ प्रकृतिर्ज्ञानरहिता तत्संसृष्टो

१. द्वै ॥ तामिति पाठः ॥ २. अ ॥ राहोः शिर इतिवद्भेदे षष्ठी ॥ ३. २. १०. ४. १२. २. ५. ५. १७. ६. धामेत्यस्य स्थानमित्यर्थः ॥ ७. इदं नित्यसूरीणामप्युपलक्षणं ॥ स्वसंकल्पानुविधायि ता. चं. अवतरणिकास्थवाक्यं) त्यादिना तेषामपि नियम्यत्वोक्तेः ॥

बद्धाऽऽत्मा परिच्छिन्नज्ञानरूपः ॥ मुक्तस्तु अपरिच्छिन्न[1]ज्ञानरूपः ॥ तादृशः स मुक्ताऽऽत्मा मम शेषभूतः ॥ अतोऽहं सर्वनियामकः ॥ [2] 'भूमिरापः' [3] 'अपरेयं' इति द्वाभ्यां प्रकृतितत्संसृष्टाऽऽत्मनोर्नियम्यत्वमुक्तं ॥ अत्र तु मुक्तस्यापीति भेदः ॥ २१ ॥

संजयः ॥ भक्तियोगजननाय भगवता स्वमाहात्म्ये प्रतिपादिते कथमीदृशमहामहिमवान् प्रभुः परमात्मा मया प्राप्तुं शक्यः ॥ कथं तमहं प्राप्नुयां ॥ इति चिंतादंतुरितांतरोऽभूदर्जुनः ॥ तदा सर्वांतर्यामित्वेन सर्वसाक्षित्वाद्विदित्वा तदीयां चिंतां परिहर्तुं तां उक्तं वक्ष्यमाणं च माहात्म्यं प्रसिद्धत्वादनूद्य तथाऽपि स नितरां सुलभः भक्तिरेव तल्लाभोपायः इत्याह ॥

कृष्णः ॥ पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥
यस्यांतस्स्थानि भूतानि येन सर्वमिदं ततं ॥२२॥

पुरुष इति ॥ हे पार्थ भूतानि यस्य अंतः तिष्ठंतीति अन्तस्स्थानि ॥ येन इदं सर्वं ततं व्याप्तम् ॥ परः सः पुरुषः न विद्यते अन्यत् यस्यां सा अनन्या तया अनन्यया भक्त्या तु एव लब्धुं योग्यः लभ्यः ॥ २२ ॥

[4] पुरि शयनात्पुरुषो जीवः ॥ [5] पूर्णषड्गुणत्वात् [6] निरतिशयमोक्षफलप्रदत्वाच्च पुरुषः परमात्मा ॥ पुरुषशब्दवाच्ययोस्तयोर्मध्ये परमः परमात्मा ॥ स प्राप्तुं शक्य [7] एव ॥ केनोपायेनेति चेत् पार्थ अविच्छिन्नस्नेहधाराप्रवाह[8]रूपया माहात्म्यज्ञानपूर्वकसुदृढस्नेहात्मिकया भक्त्या लभ्यः ॥ कीदृशी भक्तिः कार्येति चेत् यस्यां भक्तौ भगवल्लाभादितरत्प्रयोजनं नापेक्षितं सा अनन्या भक्तिः तया

१. धाम तेजः तच्चेह ज्ञानरूपः प्रकाशः ॥ परमं धाम अपरिच्छिन्नज्ञानरूपो मुक्ताऽऽत्मेत्यर्थः ॥ इति भावः ॥ २. ७. ४. ३. ७. ५. ४. पुरि शेते इति पुरुषः ॥ ५. पुरूणि पूर्णाणि षट् यस्य सः पुरुषः ॥ ६. पुरु उत्तमं फलं सनोति इति पुरुषः ॥ ७. तुः एवार्थः ॥ तस्य लभ्यस्तु भक्त्या तु इत्युभयत्रान्वयः ॥ ८. अ ॥ ज्ञानरूपया ॥ वि ॥ प्रेमरूपया ॥

लभ्यः ॥ किं भक्त्येव साधनांतरेणापि लभ्येतेति चेत् भक्त्यैव लभ्यः ॥ स कीदृशः येन सर्वमिदं ततं ॥ सर्वं जगत्तेन व्याप्तं ॥ वक्ष्यते च ॥ १'मया ततमिदं सर्व'-मिति ॥ सर्वाणि भूतानि तदुदरस्थानि प्रलये ॥ २ 'यत्प्रयंत्यभिसंविशंती'ति श्रुतेः ॥ वक्ष्यते च ॥ ३ 'यदा भूतपृथग्भावं एकस्थमनुपश्यती'ति ॥ ४ कारणं परमात्मा कार्याणि भूतानि कार्याणि कारणांतर्वर्त्तीनि ॥ अतो भूतानि तदंतस्स्थानि ॥ महामहिमवत्त्वेपि परमात्मनो भक्त्या लभ्यत्वात् कथमहं तं प्राप्नुयामिति चिंतां मा कार्षीः ॥ २२ ॥

अर्जुनः ॥ अन्यान् प्राप्ता निवर्तंते ॥ मां प्राप्तास्तु न निवर्तंते इत्युक्तं ॥ ये निवर्तंते ये न निवर्तंते किमुभयेषामेक एव पंथाः उत तत्तत्प्राप्यफलतारतम्येन मार्गभेदोऽस्ति ॥ दृश्यते हि लोके महतीषु सभासु तत्तदुपवेशार्होत्तममध्यमाधमाऽऽसनतारतम्यानुरोधेन मार्गभेदः ॥ सौधाऽऽरोहणाय सोपानभेदश्च ॥

कृष्णः ॥ यत्र काले त्वनावृत्तिं आवृत्तिं चैव योगिनः ॥
प्रयाता यांति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

यत्रेति ॥ भरतानां ऋषभः भरतर्षभः हे भरतर्षभ पार्थ योगः एषां अस्तीति योगिनः तु यत्र काले प्रयाताः मतः न आवृत्तिः अनावृत्तिः तां आवृत्तिं चैव यांति तं कालं वक्ष्यामि तु शब्दो विशेषे ॥ २३ ॥

फलतारतम्येन मार्गभेदोऽस्ति ॥ तत्र ५कर्मिणः एकस्मिन् पथि गत्वा निवर्तंते ॥ ज्ञानिनः अन्यस्मिन् पथि गत्वा न निवर्तंते ॥ उभयोरपि मार्गयोः कालाभिमानिन्यो देवता वर्तंते ॥ अत उभावपि मार्गौ कालशब्देनोच्येते ॥ ज्ञानिनां कर्मिणां च मार्गं ते वक्ष्यामि ॥ शृणु ॥ द्वयोर्मार्गयोरितरेतरं महान् ६ विशेषो वर्तते ॥ पुरुषश्रेष्ठत्वादुत्तममार्गार्हस्त्वम् ॥ २३ ॥

अर्जुनः ॥ ये न निवर्तंते तेषां मार्गं ब्रूहि ॥

१. ९. ४. २. तै. ३. १. ३. १३. ३१. ४. अ ॥ ५. योगिनः ज्ञानयोगिनः कर्मयोगिनश्च ॥ ६. तुशब्दो विशेषसूचकः ॥

कृष्णः ॥ अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥

अग्निरिति ॥ अग्नि. ज्योतिः अह शुक्लः उत्तरं च तत् अयनं च उत्तरायणं षट् मासाः यत्र वर्तन्ते ॥ ब्रह्म विदन्तीति ब्रह्मविदः जनाः तत्र प्रयाताः संतः ब्रह्म गच्छन्ति ॥ २४ ॥

१अग्निः ज्योतिः देवता अहरभिमानिनी देवता शुक्लपक्षाभिमानिनी देवता उत्तरायणरूपमासषट्काभिमानिनो देवता एता देवताः यस्मिन् मार्गे वर्तंते तस्मिन् गत्वा ब्रह्म प्राप्नुवंति ॥ ब्रह्मज्ञानिनः २ चतुर्मुखं प्राप्य तत्र स्थित्वा तेन सह परं ब्रह्म प्राप्नुवंति ॥ 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ॥ परस्यांते परात्मानः प्रविशंति परं पदं' ॥ इत्युक्तेः ॥ ३'तेऽर्चिषमभिसंभवंति अर्चिषोऽहरन्ह आपूर्यमाणपक्षं आपूर्यमाणपक्षाद्यान्षडुदङ्ङेतिमासान्' इति श्रुतिरत्रबोध्या ॥ न सर्वेषां ब्रह्मज्ञानिनां अयं मार्गः किंतु केषांचिदुत्तमानामेवेति भ्रमपरिहाराय जना इति सामान्यशब्दनिर्देशः ॥ २४ ॥

अर्जुनः ॥ ये पुनर्निवर्तंते तेषां मार्गं मे ब्रूहि ॥

कृष्ण ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनं ॥
तत्र चांद्रमसं ज्योतिः योगी प्राप्य निवर्तते ॥ २५ ॥

धूम इति ॥ धूमः रात्रिः तथा कृष्णः दक्षिणं च तत् अयनं च दक्षिणायनं

१. द्वै ॥ अग्निदेवता ज्योतिर्देवता ॥ अग्नेः पुत्राविमौ ॥ धूमाभिमानिनी देवता ॥ एतासां कालानभिमानित्वेऽपि छत्रिन्यायेन काले इत्युक्तिः ॥ अ ॥ अग्निः ज्योतिः धूमः कालाभिमानिन्यो देवताः ॥ यद्वा अन्या एव देवताः ॥ छत्रिन्यायेन काले इत्युक्तिः ॥ वि अग्निरूपज्योतिर्देवता ॥ सैवार्चिर्देवता ॥ अत एव 'अर्चिषमभिसंभवती'ति श्रुत्यनुगतिः ॥ २. ब्रह्मशब्देन उभयोर्ग्रहणं ॥ ३. छां ५. १०. १.

षट् मासाः यत्र वर्तंते ।। योगी तत्र प्रयातः सन् चंद्रमसः इदं चांद्रमसं ज्योतिः प्राप्य निवर्तते ॥२५॥

धूमाभिमानिदेवता राज्यभिमानिदेवता कृष्णपक्षाभिमानिदेवता दक्षिणायनरूपमासषट्काभिमानिदेवता एताः यस्मिन्मार्गे वर्तंते तस्मिन् मार्गे १गत्वा चंद्रलोके चंद्रज्योतिरनुभूय सुखं कंचित्कालमनुभूय निवर्तते कर्मयोगिनः ।। २'ते धूममभिसंभवंति धूमाद्रात्रिं रात्रेरपरपक्षं अपरपक्षाद्यान् षड् दक्षिणैति मासा'निति श्रुतेः ॥ २५ ॥

अ ॥ येषां कस्मिंश्चित्स्थाने नित्यसुखानुभवो मोक्ष इति मतं तेषां तत्र गमनाय मार्गः कश्चित् स्यात् ॥ सच वक्तव्यः तत्साधने रुच्युत्पादनाय ॥ येषां प्रतिबंधकप्रकृतिबंधनाशे सद्य एव स्वस्थान एव एकीभावरूपो मोक्षः इति मतं तेषां गंतव्यस्थलाभावात् मार्गो न स्यात् ॥ अतो मार्गोपदेशस्तन्मते कथं युज्यते ॥ इति चेत् मुक्तिर्द्विविधा ॥ अक्रममुक्तिः क्रममुक्तिश्चेति ॥ ब्रह्मज्ञानाद्बंधनिवृत्तौ घटाकाशस्य महाकाशेनेव स्वस्य परब्रह्मणैकीभावः सद्योमुक्तिशब्दिता अक्रममुक्तिः ॥ सगुणब्रह्मोपासकानां क्रमेण तंतं लोकं प्राप्य तत्तद्भोगाननुभूय तद्भोगावसाने सम्यग्दर्शनशब्दितं ब्रह्मज्ञानं प्राप्य चतुर्मुखेन सह परब्रह्मणैकीभावः क्रममुक्तिः ॥ तत्र अक्रममुक्तिभाजां नांतिमस्मरणापेक्षा ॥ अविद्यानिवृत्त्या अन्यस्मरणप्रसंगाभावात् ॥ नच पुनरावृत्तिः ॥ अविद्यायाः निवृत्तत्वात् ॥ हेत्वंतरस्य चाभावात् ॥ नापि मार्गोपयोगः ॥ स्वस्थान एव मुक्तिप्राप्तेः ॥ क्रममुक्तिभाजां तु अस्ति अंतिमस्मरणापेक्षा ॥ तत्तल्लोकभोगानुभवात्प्रागनुत्पन्नसम्यग्ज्ञानत्वेन तेषामन्यस्मरणप्रसक्तेः सत्वात् ॥ ब्रह्मलोकपर्यंतं गमनाय मार्गापेक्षाऽपि तेषां ॥ अक्रममुक्तिभाजामिव तेषामपि न पुनरावृत्तिः ॥ मुक्तिप्रकारभेदेऽपि मुक्तेस्तुल्यत्वात् ॥ यद्येवं तर्हि 'आब्रह्मभुवनाल्लोका' इति ब्रह्मलोकं गतानां पुनरावृत्युक्तिरयुक्ता स्यादिति चेत् न तत्रनिवृत्तिकर्मसहिताभिर्दहरविद्याद्युपासनाभिः क्रममुक्तिहेतुभूताभिर्ब्रह्मलोकं प्राप्तानां पुनरावृत्तिरुक्ता ॥ किंतु काम्यकर्मसहिताभिः पंचाग्निविद्याद्युपासनाभिः कर्मफलानुभवाय ब्रह्मलोकं प्राप्तानां ॥ एतदभिप्रायैव 'योगी प्राप्य निवर्तते

१. प्रयाता इति पदस्यानुवृत्तस्य प्रयात इति विपरिणामः ॥ २. छां. ५. १०. ३.

इत्युक्तिः ॥ ब्रह्मविदः सगुणब्रह्मोपासकाः ब्रह्म चतुर्मुखाख्यं गच्छंति ॥ तत्र स्थित्वा ब्रह्मविदः ब्रह्मज्ञानिनस्संतः ब्रह्म परं ब्रह्म प्राप्नुवंतीत्यर्थः ॥ चांद्रमसं ज्योतिः प्राप्ये त्युपलक्षणं ॥ ब्रह्मलोकं प्राप्येत्यपि बोध्यं ॥ अकाम्यकर्मणा क्रममुक्तानां ज्ञानेन सद्योमुक्तानां च न पुनरावृत्तिः । काम्यकर्मणा ब्रह्मलोकपर्यंतं गतानां तद्भोगानंतरं पुनरावृत्तिः ॥ निषिद्धकर्मणा नरकान् प्राप्तानां तद्भोगानंतरं पुनरावृत्तिः ॥ क्षुद्रकर्मणातु न स्वर्गादिः नापि नरकः अपितु पुनःपुनर्जन्मेति विवेकः ॥ २४ ॥ २५ ॥

वि ॥ कैवल्यं मोक्षं च प्राप्स्यतां साधारणोऽयमर्चिरादिमार्गः ॥ अनेन मार्गेण गत्वा कैवल्यं मोक्षं च प्राप्तानां न पुनरावृत्तिः ॥ कैवल्यानुभवस्थानं सत्यलोकात्परं मुक्तस्थानादर्वाचीनं ॥ यद्यपि कैवल्ये मोक्षे च प्रकृतिबंधरहितशुद्धात्मानुभवोऽस्ति ॥ तथाऽपि मोक्षे प्राधान्येन परमात्मानुभवः ॥ कैवल्ये तु प्राधान्येनाऽऽत्मानुभव इति भेदः ॥ कैवल्यार्थिनः परमात्मशरीरभूततया परमात्मोपसर्जनकस्वात्मोपसकाः ॥ मोक्षार्थिनस्तु स्वात्मशरीरकतया स्वात्मोपसर्जनकपरमात्मोपासकाः ॥ मोक्षार्थिनां ज्ञानिनां मोक्षे स्वविशिष्टो भगवान् भोग्यः ॥ कैवल्यार्थिनां कैवल्ये स्वात्मस्वरूपमेव भोग्यं ॥ ततो मोक्षफलकोपासनाभिरंततो मोक्षे ब्रह्मानुभवः ॥ ऐश्वर्यार्थिनां पुनरावृत्तिमतां धूमादिमार्गः ॥ ब्रह्मविदः ब्रह्मतुल्यशुद्धात्मोपासकाः ब्रह्म शुद्धात्मानं गच्छंति ॥ ब्रह्मविदः परब्रह्मोपासकाः ब्रह्म परब्रह्म गच्छंति ॥ योगी ऐश्वर्यफलकप्रवृत्तिकर्मयोगवान् इत्यर्थः ॥ २४ ॥ २५ ॥

उत्तरायणे मृताः ब्रह्म प्राप्नुवंति ॥ दक्षिणायने मृताः स्वर्गं प्राप्नुवंति ॥ इत्यर्थः प्रतीयते ॥ 'दक्षिणे मरणाद्याति स्वर्गं ब्रह्मोत्तरायणे' ॥ इत्युक्तेः ॥ अत एव प्रतीक्षितवान् उत्तरायणं भगवान् भीष्मः ॥ इति भाति ॥ न तथा ॥ अत्र उत्तरायणदक्षिणायनदेवताधिष्ठितमार्गगतेर्विवक्षितत्वात् ॥ 'दक्षिणे मरणा'दिति वचनस्य न यथाश्रुतोऽर्थः ॥ ज्ञानिनां दक्षिणायने मरणसंभवात् ॥ नच तेन ते स्वर्गं प्राप्नुवंतीति युक्तं ॥ अज्ञानामुत्तरायणे मरणसंभवात् ॥ नच तेन ते ब्रह्म प्राप्नुवंतीति युक्तं ॥ किंतु कर्मणा स्वर्गः ज्ञानेन मोक्षः इत्येव स्थितिः ॥ देहसंबद्धदक्षिणायनसूर्यरश्मिभिरुत्क्रमणात्स्वर्गं याति ॥ तादृशोत्तरायणसूर्यरश्मिभिरुत्क्रमणात् ब्रह्म याति इति वचनार्थः ॥ अतो दक्षिणायनोत्तरायणशब्दयोस्तत्तत्सूर्यरश्मि-

परत्वात् ज्ञानिनां दक्षिणायनेऽपि मरणं युज्यते ॥ सूत्रं च तथा[१] ॥ 'रश्म्यनुसारी' इति ॥ [२] 'अतश्चायनेऽपि हि दक्षिणे ॥ इति च ॥ [३] 'शतं पंचैव सूर्यस्य दक्षिणायनरश्मयः ॥ तावंत एव निर्दिष्टा उत्तरायणरश्मयः ॥ ते सर्वे देहसंबंधास्सर्वदा सर्वदेहिनां ॥ उत्तरं दक्षिणमिति त एव तु निगद्यते' ॥ इति स्मृतिश्च ॥ उत्तरायणस्य शुक्लपक्षस्य अह्नश्च प्राशस्त्याद्भीष्मस्योत्तरयाणमरणप्रतीक्षा ॥ दक्षिणायनकृष्णपक्षरात्रिमरणेषु प्रायश्चित्तकरणमप्यप्राशस्त्याभिप्रायकं ॥ अतो युक्तं सर्वमुक्तम् ॥ २४ ॥ २५ ॥

अर्जुनः ॥ न केवलमकाम्यं कर्म कुर्वतो मोक्षरूपमतिशयितं फलं॥किंतु प्रकाशभूयिष्ठो नितरांसुखप्रदो मार्गोऽपि ॥ अतो गंतव्यस्य मार्गस्य तत्र गत्वा प्राप्यस्य च उत्तमत्वात्कर्तव्यमेवाकाम्यं नियतं कर्मेति मम रुच्युत्पादनाय किमिमौ मार्गौ त्वयैवोच्येते ॥ उत श्रुतिपुराणादिषु प्रसिद्धावनादी इमौ ॥

कृष्णः ॥ शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते ॥
एकया यात्यनावृत्तिं अन्ययाऽऽवर्तते पुनः ॥ २६ ॥

शुक्लेति ॥ शुक्ला च कृष्णा च शुक्लकृष्णे एते गती मार्गौ जगतः शाश्वते मते ॥ हि प्रसिद्धं ॥ एकया गत्या प्रयातः अनावृत्तिं याति ॥ अन्यया गत्या प्रयातः पुनः आवर्तते ॥२६॥

सर्वस्मिन् जगति विद्यमानानां ज्ञानिनां कर्मिणां च एतौ प्रकाशाप्रकाशभूयिष्ठत्वात् ज्ञानकर्मप्राप्यत्वाच्च शुक्लकृष्णशब्दितौ गतिशब्दितौ मार्गौ प्रवाहतोऽनादी श्रुतिपुराणादिषु प्रसिद्धौ सर्वस्य जगतः संमतौ न केवलं मम ॥ अनयोः प्रथमया शुक्लया[४] प्रयातोऽनावृत्तिं याति ॥ द्वितीयया कृष्णया प्रयातः पुनरावर्तते ॥ एते आवृत्त्यनावृत्ती सर्वस्य जगतः संमते श्रुत्यादिषु प्रसिद्धे ॥ निवृत्तिकर्मणा ज्ञानयोगं प्राप्य शुक्लया गत्या गच्छन् तत्र स्थिताभिर्देवताभिराराध्यमानो ब्रह्म प्राप्नोति ॥ नच निवर्तते ॥ अतः कर्तव्यमकाम्यं कर्म ॥ २६ ॥

१. ४. २. १८. २. ४. २. २१. ३. नारायणाध्यात्मे ॥ ४. 'प्रयाता' इति पद विपरिणामेनानुवर्तते ॥

अर्जुनः ॥ स्तांनाम मार्गाविमौ श्रुत्यादिषु प्रसिद्धौ किमर्थं तौ मह्यमुपदिशसि॥ किं भविष्यति मम तद्ज्ञानेन ॥

कृष्णः ॥ नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ॥
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

नेति ॥ हे पार्थ एते सृती एतौ मार्गौ जानन् कश्चन कोपि योगी न मुह्यति॥ हे अर्जुन तस्मात् सर्वेषु कालेषु योगेन युक्तः योगयुक्तः भव ॥ २७ ॥

कर्मयोगादिषु प्रवृत्तः यदि सुखासुखदाविमौ मार्गौ जानाति तर्हि सः संशय-विपर्ययादिरहितो निवृत्तिकर्मैव कर्तव्यमिति कृतनिश्चयस्तत्रैव प्रवर्तेत ॥ न काम्य-कर्मादौ ॥ अत इमौ तुभ्यमुपदिष्टौ ॥ अतः तत्तदनुष्ठानसमयेषु उक्तगतिद्वय¹स्मर-णवान् भव ॥ तेन च शुक्लगतिप्राप्तिहेतुभूतनिवृत्तिकर्मतत्साध्यज्ञानरूपोपायवान् भव ॥ तेन च तव पुनरावृत्तिरहितं मोक्षरूपमतिशायितं फलं नियतं भविष्यति ॥ २स्वतो वंशतश्च शुद्धस्य तव सेत्स्यत्यर्चिरादिमार्गस्तदुपायश्च ॥ नात्र संशयः॥२७॥

संजयः ॥ श्रद्धावानप्यर्जुनः किमेतावताऽपि नावसित उपदेशः ॥ अलमे-तावता ॥ इत्यमन्यत मनसि जामितां प्राप्तः ॥ सद्य एव सर्वसाक्षी हृषीकेशो भगवान् विदित्वा तत् भूयः शुश्रूषोत्पादनाय गीताश्रवणवेदनादिफलमाह ॥

कृष्णः ॥ वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टं ॥
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यं ॥२८॥

वेदेष्विति ॥ वेदेषु यज्ञेषु तपस्सु दानेषु चैव यत् पुण्यरूपं च तत् फलं च पुण्यफलं प्रदिष्टं उपदिष्टं ॥ इदं विदित्वा तत् सर्वं अत्येति ॥ योगी सन् परं आद्यं स्थानं च उपैति ॥ ८ ॥

वेदेषु यज्ञेषु तपस्सु दानेषु च प्रत्येकं तत्रतत्र 'य एवं वेद' 'यो यजते' यस्तप्यते' 'यो ददाती'त्येवं यद्यत्फलं व्यष्ट्या उपदिष्टं ॥ एवं सर्वेषु वेदेषु

१. योगीत्यस्य गतिस्मरणवान् कर्मज्ञानयोगवांश्चेत्यर्थः ॥ २. संबोधनद्वयतात्पर्यमिदं

तन्मूलकपुराणादिषु च अधीतेषु विचारितेषु अर्थतो ज्ञातेषु सर्वेषु यज्ञेषु वाजपेयादिषु कृतेषु सर्वेषु तपस्सु तप्तेषु सर्वेषु दानेषु दत्तेषु च यत्फलं समष्ट्या उपदिष्टं तत्रतत्र ॥ इदं गीताशास्त्रं विदित्वा उक्त्वा श्रुत्वा वा तत्सर्वं फलमतिक्रामति ॥ ततोऽप्यतिशयितं फलं प्राप्नोति ॥ न केवलं तावन्मात्रं ॥ किंतु गीताश्रवणादिना लब्धविवेकः निवृत्तिकर्मयोगादिमान् सन् परमं आद्यं मोक्षस्थानं प्राप्नोति ॥ तिष्ठत्यस्मिन्नशेषमिति व्युत्पत्त्या स्थानशब्दितं १ सर्वजगदाधारभूतं ब्रह्म प्राप्नोति ॥ तादृशमहाफलकमिदं गीताशास्त्रं ॥ अयं ते परमो लाभः ॥ स्यादनेन निरवधिकमिहामुत्र च परमं मङ्गलम् ॥ २८ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
कृष्णार्जुनसंवादे अक्षरब्रह्मयोगो नाम अष्टमोऽध्यायः ॥ ८ ॥

इतीत्यादि पूर्ववत् ॥ अक्षरब्रह्मणः प्रतिपाद्यतया योगः यस्मिन् सः अक्षरब्रह्मयोगः इति नाम प्रसिद्धः अष्टमोऽध्यायः इति संपूर्णः ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते अक्षरब्रह्मयोगाध्यायार्थ
प्रदर्शकः अष्टमः प्रतिबिंबः ॥

---

श्रीगुरुभ्यो नमः ॥

# अथ नवमोऽध्यायः ॥

---

अर्जुनः ॥ यदि गीताश्रवणादिकमीदृशमहाफलकं स्यात् हंत तर्हि गीताया-मितोऽन्यत् किमप्यस्ति चेत् ब्रूहि तन्मे केशव ॥ उक्तगीतामाहात्म्यश्रवणेन समुपजातसादरशूश्रुषातिशयोऽहमस्मि ॥

कृष्णः ॥ इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ॥

ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

इदमिति ॥ यत् ज्ञात्वा अशुभात् मोक्ष्यसे तत् अतिशयेन गुह्यं गुह्यतमं इदं तु न असूयुः अनसूयुः तस्मै अनसूयवे ते तुभ्यं प्रवक्ष्यामि ॥ १ ॥

चेत्तव शुश्रूषा तर्हि प्रियतमाय ते सम्यक् वक्ष्यामि ॥ शृणुसादरं॥ यद्वक्ष्यामि तदितोऽपि विशेषवत् परमं रहस्यं ॥ १ विशेषमाहात्म्यसहितं सामान्यमाहात्म्यमहं वक्ष्यामि ॥ इदं ज्ञात्वा ज्ञानद्वारा मोक्षप्रतिबंधक२शुभाशुभोभयबंधमोक्षो भवेत् उक्तं च मया ॥ ३'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ॥' इति ॥ वक्ष्यते च ॥ ४'शुभाशुभफलैरेवं मोक्ष्यसे कर्मबंधनैः'॥ इति ॥ किमहमितोऽपि वरीयसो गीतार्थस्य श्रवणमर्हामि ॥ किं मां तथाविधं मन्यते भवान् इति चेत् शृणु ॥ नेदानीं आकांक्षणीयसकलशुभगुणगणपूर्णोऽसि ॥ श्रुत्वेमां गीतां अनुष्ठाय च एतदुक्तं विहितं कर्म तेन प्रतिपद्य चित्तशुद्धिं तया च लब्ध्वा ज्ञानयोगं तन्महिम्ना खलु तादृशो भविष्यसि ॥ किंतु सर्वथा वर्जनीयस्य महत एकस्य दोषस्य वर्जनात्

१. अ ॥ अपरोक्षज्ञानसहितं परोक्षज्ञानं ॥ वि ॥ उपासनाख्यभक्तिरूपं ज्ञानं तद्गतविशेषज्ञानं विज्ञानं ॥ २. शुभात् अशुभात् इति च्छेदः ॥ ३. २. ५०. ४. ९. २८.

तत्वोपदेशयोग्यतामभ्युपगम्य तत्वमुपदेष्टुमारब्धवानहं ॥ सच गुणेषु दोषारोपरूपोऽसूयाख्यो दोषः ॥ सच सर्वगुणनाशकत्वात् सर्वथा वर्जनीयः ॥ उक्तं च ॥ 'असूयैका गुणान् हंति सर्वेषामशुभा शुभान् ॥ स्याद्वपुस्सुंदरमपि श्वित्रेणैकेन दुर्भगं' इति ॥ त्वयेव सर्वैरयं दोषः सर्वथा त्याज्यः ॥ नचेदनर्थकं स्यात् गीताश्रवणादिकं तेषामिति मे मतिः ॥ १ ॥

अर्जुनः ॥ अहो वक्ष्यमाणस्य ज्ञानस्य माहात्म्यमन्यादृशं भाति ॥ तत्पुनः कीदृशम् ॥

कृष्णः ॥ राजविद्या राजगुह्यं पवित्रमिदमुत्तमं ॥
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययं ॥ २ ॥

राजेति ॥ इदं विद्यानां राजा राजविद्या गुह्यानां राजा राजगुह्यं पवित्रं उत्तमं प्रत्यक्षस्य भगवतः अवगमः येन, प्रत्यक्षेण अवगमः यस्य, प्रत्यक्षः अवगम्यते इति अवगमः ज्ञेयः भगवान् येन वा प्रत्यक्षावगमं धर्मादनपेतं धर्म्यं न विद्यते व्ययो यस्य तत् अव्ययं कर्तुं सु अत्यंत सुखं सुकरं ॥ २ ॥

इदं वक्ष्यमाणं परोक्षज्ञानं १ विद्यानां राजा विद्यासु राजेव प्रधानं ॥ गुह्यानां राजा गुह्येषु राजेव प्रधानं ॥ २ विद्येयं राज्ञी ॥ गुह्यमिदं राजभूतं ॥ ३ विस्तीर्णागाधमनसां गोपनीयगोपनकुशलानां राज्ञां तत्तुल्यानां च विद्येयं ॥ इदं पापनिवर्तकं ॥ पापपरिहारकप्रायश्चित्तकोटितोप्युत्तमं ४ प्रतींद्रियं नियामकतयाऽवस्थितस्य परमात्मनः साक्षात्कारोऽनेन जायते ॥ इदं ज्ञानं केन प्रमाणेन ज्ञायत इति चेत् ५ मानसप्रत्यक्षाख्यसाक्षिप्रत्यक्षेण ज्ञानमिदं, अहं सुखी अहं दुःखीति सुखादिकमिव ज्ञायते अहं ज्ञानीति ॥ ६ फलं चास्य साक्षिप्रत्यक्षेण ज्ञायतेऽज्ञाननि-

१. विद्यानां राजा गुह्यानां राजा ॥ २. राज्ञी च सा विद्या च ॥ राजभूतं गुह्यं ॥ ३. राज्ञां विद्या राज्ञां गुह्यं ॥ ४. टू ॥ अवगम्यतेऽनेनेत्यवगमं प्रत्यक्षस्य हरेरवगमं ॥ वि ॥ प्रत्यक्ष अवगम्यते इत्यवगमो विषयः स परमात्मा येन तत् ॥ अ ॥ ५. प्रत्यक्षेणावगमो यस्य, प्रत्यक्षं अवगम्यतेऽनेनेत्यवगमो मानं यस्य वा तत् ॥ ६. 'प्रत्यक्षः अवगम्यत इत्यवगमः फलं यस्य तत् ॥

वृत्त्यादिकं ममाज्ञानं नष्टमनेन ज्ञानेनेति ॥ इदं धर्मादनपेतं अयमेव परमो धर्मः धर्मशब्दवाच्यस्य परमात्मनोऽत्यंतप्रियं तद्विषयं ॥ महाफलस्य मोक्षस्य नित्यत्वात् फलतो नाशरहितं ॥ एताहशमिदं कथं मया प्राप्तुं शक्यमिति मा व्यथिष्ठाः ॥ संपादयितुं सुलभं ॥ गुरूपदेशेन सुप्रापं ॥ उक्तं च १ 'उपदेक्ष्यंति ते ज्ञानं ज्ञानिन' इति ॥ एताहशमिदं ॥ अतः श्रद्धया शृणु ॥ २ ॥

अर्जुनः ॥ यदि भगवद्विषयं ज्ञानमीदृशमहामहिमोपेतं महाफलकं सुकरं च स्यात् तर्हि सर्वेऽपि तत्र प्रवृत्त्य तदवाप्य तेन मुच्येरन् ॥ न कोऽपि संसरेत् ॥ दृश्यंते च प्रायः संसारिण एव लोके ॥ परमसुकरेऽपि ईदृशे ज्ञाने यदि श्रद्धावंतो न स्युः तर्हि किमनिष्टं तेन तेषां स्यात् ॥

कृष्णः ॥ अश्रद्दधानाः पुरुषाः धर्मस्यास्य परन्तप ॥
अप्राप्य मां निवर्तंते मृत्युसंसारवर्त्मनि ॥ ३ ॥

अश्रद्दधाना इति ॥ परान् तपतीति परन्तपः हे परन्तप अर्जुन धर्मादनपेतं धर्म्यं तस्य अस्य ज्ञानस्य विषये अश्रद्दधानाः श्रद्धां अकुर्वंतः पुरुषाः मां अप्राप्य मृत्युयुक्तः मृत्युरूपो वा संसारः मृत्युसंसारः तस्य वर्त्मनि मार्गे निवर्तंते ॥ ३ ॥

२ धर्मशब्दवाच्यभगवद्विषयस्य ३ निरपायस्थितिहेतुतया धर्मशब्दितस्य अस्य ज्ञानस्य विषये श्रद्धारहिता ये जनाः ते न मां प्राप्नुवंति ॥ न मोक्षस्तेषां ॥ मृत्युरूपे मृत्युयुक्ते च संसारमार्गे नितरां निश्चयेन वर्तंते ॥ पुनःपुनः संसारचक्रे परिभ्रमंति ॥ ज्ञानमार्गे श्रद्धाराहित्यात्संसारिणो दृश्यंते ॥ यदि नास्मिन्मार्गे श्रद्धा स्यात् तर्हि तेन तेषां संसारचक्रे परिभ्रमणं स्यात् ॥ अतोऽत्र श्रद्धा कार्या ॥ ३ ॥

अर्जुनः ॥ एवमर्थानर्थयोः श्रवणात् श्रद्धातिशयवानहमस्मि संवृत्तः ॥ अतो यद्वक्तव्यं तत्प्रब्रूहि ॥

सं ॥ एवमर्जुनस्य श्रद्धातिशयमुत्पाद्य सप्तमादौ सृष्टिसंहारादिकर्तृत्वमिव नवमादावत्र सर्वत्र व्याप्तिमत्त्वरूपं माहात्म्यमाह भगवान् ॥

१. ४. ३४. २. धर्म्यस्येति पाठे इदं ॥ ३. धर्मस्येति पाठे इदं ॥ ध्रियते अनेनेति धर्मः ॥

कृष्णः ॥ मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ॥
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

मयेति ॥ न व्यक्ता अव्यक्ता मूर्तिः शरीरं यस्य सः अव्यक्तमूर्तिः तेन व्यक्तमूर्तिना मया सर्वं इदं जगत् ततं व्याप्तं ॥ सर्वाणि च तानि भूतानि च सर्वभूतानि मयि तिष्ठंतीति मत्स्थानि ॥ अहं तेषु न च नैव अवस्थितः ॥ ४ ॥

सर्वमिदं चेतनाचेतनात्मकं जगत् अंतर्बहिश्च व्याप्य स्थितोऽहं ॥ १ 'अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ॥ इति श्रुतिः ॥ यदि सर्वत्र स्थितः तर्हि कुतः क्वापि न दृश्यसे इति चेत् २ 'मोहितं नाभिजानाति मां' ॥ 'योगमायासमावृत' इत्युक्तरीत्या विचित्रशक्त्या स्वरूपं निगूह्य तिरोहितोऽहं तत्र तत्तद्व्याप्य वर्ते ॥ किं तत्तत्स्वरूपसत्ताप्रवृत्त्यर्थं तत्रतत्र तिरोहितस्तिष्ठसि॥ तत्तत्स्वरूपसत्ताप्रवृत्त्यर्थमिति चेत् सर्वाणि भूतानि ४ मत्स्थानि मदायत्तस्थिति वृत्तीनि ॥ यथा चोलनृपे नेपालनृपं तिष्ठामि इत्युक्ते तदायत्तस्थितिप्रवृत्तिरहं तेन व्यमाणो वर्ते इति प्रतीयते तथा ॥ न चाहं तेषु अव५स्थितः नैवाहं तदायत्तस्थितिप्रवृत्तिः ॥ स्वतंत्रत्वात् ॥ महानयं मे महिमा ॥ ४ ॥

अर्जुनः ॥ यदि भूतानि त्वयि स्थितानि स्युः तर्हि वह्निजलौष्ण्यशैत्याभ्यां जलस्यौष्ण्यशैत्यवत् भूतलौष्ण्यशैत्याभ्यां तन्निहितवस्त्रादेरौष्ण्यशैत्यवत् अन्योन्यधर्मसंक्रमणं स्यात् ॥ ततश्च तत्तद्दोषलेपस्तव स्यात् ॥ महते उत्कर्षाय आधारत्वमुररीकृत्य आधेयस्य जगतो दोषैः लिप्यसे ॥ क्लिश्यति हि लोके स्वमहिमप्रदर्शनाय विविधकार्यभरं वहन् शिरसि जनः ॥ वद ॥

कृष्णः ॥ न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥
भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः ॥ ५ ॥

१. ना. १३. २. ७. १३. ३. ७. २५. ४. अ ॥ शुक्त्यादिष्विव रजतादीनि कल्पितानि नाभूतानि अधिष्ठानभूते मयि स्थितानि ॥ ५. अ ॥ रजतादिष्विव शुक्त्यादीनि नाहमारोपितेषु [ स्थितः ॥

नचेति ॥ भूतानि मत्स्थानि नच नैव ॥ ईश्वरस्य अयं ऐश्वरः तं मे योगं सामर्थ्यं पश्य ॥ मम आत्मा भूतानि बिभर्ति इति भूतभृत् ॥ भूतेषु तिष्ठतीति भूतस्थः नच ॥ भूतानि भावयतीति भूतभावनः ॥ ५ ॥

भूतलघटजलादीनामिव न मम भूतानां चाऽऽधाराधेयभावः ॥ किंतु असंगत्वान्मम असंश्लेषेणैव भूतानि मत्स्थानि ॥ तानि चाहं असंश्लेषेणैव धारयामि ॥ परस्परमसंश्लिष्टानां कथमाधाराधेयभाव इति चेत् मदीयं परमात्मासाधारणं ईश्वरत्वप्रदर्शकं सामर्थ्यं पश्य ॥ किं तत् इति चेत् ममाऽऽत्मा १ देहः २ स्वरूपं वा ३ संकल्पो वा असंश्लेषेणैव भूतानि बिभर्त्ति धारयति पोषयति ॥ तथा भूतानि सृजति ॥ नियमयति सर्वमिदं तत्स्वरूपसत्ताप्रवृत्त्यर्थं ॥ नतु मदर्थं ॥ ४असंश्लेषेण धारणं उत्पादनपोषणनियमनादिकं मदसाधारणसामर्थ्यहेतुकं जानीहि ॥ अतो न मम दोषलेपः ॥ नापि क्लेशः ॥ यद्यपि स्थितिकर्तृत्वं ५ 'मयि सर्वमिदं प्रोत 'मित्युक्तं ॥ तथाऽपि तत्र तत्केवलं ॥ अत्र तु उक्तविशेषविशेषितमिति भेदः ॥ ५ ॥

अर्जुनः ॥ तवभूतानां चाधाराधेयभावोऽसंश्लेषेणैवेत्युक्तं ॥ तत्कथं लोके संश्लिष्टयोर्हि वस्तुनोराधाराधेयभावो दृश्यते॥ यद्यसंश्लेषेणाधाराधेयभावे दृष्टांतः प्रदर्श्येत तर्हि तमिममाधाराधेयभावमहं श्रद्दध्याम् ।

कृष्णः ॥ यथाऽऽकाशस्थितो नित्यं वायुस्सर्वत्रगो महान् ॥
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

यथेति ॥ सर्वत्र गच्छतीति सर्वत्रगः महान् वायुः यथा नित्यं आकाशे स्थितः आकाशस्थितः ॥ तथा सर्वाणि भूतानि मयि तिष्ठंतीति मत्स्थानि इति उपधारय ॥ ६ ॥

१. द्वे ॥ २ अ ॥ वक्तुरात्मन आत्मांतराभावाल्लोकव्यवहारानुकारोऽयं ॥ राहोः शिर इति वद्भेदे षष्ठी ॥ आत्मभूतोऽहमित्यर्थ इत्यन्य ॥ ३. वि ॥ ४ ॥ 'पश्य मे योगमैश्वर'मित्यस्य योजनांतरमिदं ॥ ५. ७. ७.

सदा सर्वत्र गमनस्वभाववान् सदागतिशब्दितो महान् वायुः अवकाशरूपे आकाशे तिष्ठति ॥ अवकाशं विना स्थित्यसंभवात् ॥ स चाऽऽधाराधेयभावोऽ श्लेषेणैव ॥ तथा सर्वाणि भूतानि मयि तिष्ठंति ॥ आकाशवाय्वोरिव मम भूतानां संश्लेषेणैवाऽऽधाराधेयभावो विद्यते ॥ अत एव नान्योन्यधर्मसंक्रांतिः ॥ ष्टांतादस्मादुक्तं युक्तमित्यवधारय ॥ नित्यं स्थितः महान्२ आकाश सर्वत्रगो हान् वायुश्च यथा असंश्लिष्टावेवाऽऽधाराधेयभावेन वर्तेते ॥ तथाऽहं भूतानि विना संश्लेषमाधाराधेयभावेन वर्तामहे ॥ दृष्टांतममुमवधारय ॥ सर्वेषु शरी- षु संचरन् मुख्यवायुः ३ आकाश इव सर्वत्र स्थितः ॥ तथाऽपि आकाश इव न्यधर्मसंक्रांतिमान् तथाऽहं सर्वेष्वाधारतया सूत्रमिव मणिषु स्थितो न तद्धर्मै- र्तो भवामि ॥ ४ 'असंगो ह्ययं पुरुष' इति श्रुतिः ॥ अन्यधर्माऽलेपे दृष्टांतम- मवधारय ॥ ५ 'मत्स्थानि सर्वभूतानी'ति सर्वभूतानां त्वदायत्तस्वरूपस्थिति- वृत्तिमत्त्व मुक्तं ॥ तत्कथं ॥ त्वं तु न दृश्यसे कुतस्त्वामनुपलभ्यमानमाश्रित्य वर्तंते र्वाणि भूतानीत्यभ्युपेयमिति चेत् सर्वत्रगो महान् वायुः नित्यं निरालंबे ६ आ- शे स्थितोऽनुभूयते ॥ नच निरालंबे वस्तुनि किमपि स्थातुमर्हति ॥ अताऽ- थाऽनुपपत्त्या वायुर्मामाकाशस्थितमाकाशशब्दितमाश्रित्य ७ मच्छासने वर्तते यभ्युपेयं ॥ तया सर्वाणि भूतानि विविधविचित्रशक्तिं मामाश्रित्य मदायत्तस्व- रूपस्थितिप्रवृत्तीनि वर्तंते ॥ 'मेघोधयः सागरसंनिवृत्तिः इंदोर्विभागः स्फुरितानि योः ॥ विद्युद्विभंगो गतिरुष्णरश्मेः विष्णोर्विचित्राः प्रभवति माया' ॥ इति ॥ 'भीषाऽस्माद्वातः पवते ॥ भीषोदेति सूर्यः' ॥ इति 'एतस्य वा ९ अक्षरस्य प्रशा- ने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः ॥ इति च श्रुतिः ॥ अतोऽसंश्लेषेणैवाऽऽ- धाराधेयभावान्नान्योन्यधर्मसंक्रांतिः ॥ अन्यथाऽनुपपत्त्या तत्तद्भूतस्वरूपस्थिति- वृत्तिनियामकत्वं चेत्युक्तं युक्तम् ॥ ६ ॥

१. आकाशे स्थितः आकाशस्थितः ॥ २. आकाशः स्थितः इति छेदः ॥ स्थितो नित्यं महान् उभयोर्विशेषणं ॥ ३. द्वै ॥ आकाश इव स्थितः आकाशस्थितः ४. बृ. ६. ३. १५. ५. वि ॥ आकाशे स्थितः आकाशस्थितः ॥ ७. आकाशशब्दिते परमात्मनि स्थितः आकाशस्थितः ॥ ८. तै . ८. ९. बृ. ५. ८. ९.

अर्जुनः ॥ सिद्धे सत्यारंभो नियमायेति न्यायः ॥ तेन पूर्वमुक्तस्य स्थिति-कर्तृत्वस्य पुनरत्रोक्त्या जगतोऽखिलस्य स्थितेरहमेव कर्ता नान्य इत्युक्तं भवति ॥ तेन च सृष्टिसंहारकर्तृत्वमन्यस्याप्यस्तीति शंकोन्मिषति तां परिहर ॥

कृष्णः ॥ सर्वभूतानि कौन्तेय प्रकृतिं यांति मामिकां ॥
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥

सर्वेति ॥ हे कौंतेय अर्जुन सर्वाणि च तानि भूतानि च सर्वभूतानि कल्पस्य क्षयः कल्पक्षयः तस्मिन् मम इयं मामिका तां प्रकृतिं यान्ति ॥ तानि कल्पस्य आदिः कल्पादिः तस्मिन् अहं वि विविधं सृजामि ॥ ७ ॥

चतुर्मुखस्य यद्दहः स कल्पः तदवसाने सर्वाणि भूतानि स्वस्वकारणद्वारा प्रकृतिं यांति प्रकृतौ लीयंते ॥ तर्हि संहारकर्तृत्वं तव कथमिति चेत् ॥ यां प्रकृतिं यांति सा प्रकृतिः मद्वशा ॥ उक्तं च मया ॥ १ 'मे भिन्ना प्रकृतिरष्टधे'ति ॥ प्रकृतावहं प्रविलापयामि ॥ प्रकृतिर्लयाधिकरणं अहं तत्कर्त्ता ॥ परस्य कल्पस्याऽऽदौ तानि भूतानि पुनरहं विविधं सृजामि ॥ चतुर्मुखस्य यदायुर्वर्षशतपरिमितं परशब्दितं स कल्पः ॥ तदवसाने चतुर्मुखादेरखिलस्य लोकस्य प्रकृतौ लयः ॥ कल्पांतरारंभे २ तानि तत्सजातीयानि च भूतानि यथासंभवं पुनरहं सृजामि ॥७॥

अर्जुनः ॥ 'मामिकां प्रकृतिं यांती'ति लये प्रकृतेरुपयोग उक्तः ॥ न तथा सृष्टौ ॥ अहंसृजामीत्युक्तं ॥ यद्येवं तर्हि सृष्टेः सृष्टानां च प्राकृतत्वं कथं ॥ ३ 'एत-द्योनीनी'तिसप्तमे सृष्टौ प्रकृतेरुपयोगोक्तिश्च विरुध्येत ॥ तत्कथम् ॥

कृष्णः ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ॥
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

प्रकृतमिति ॥ न वशः अवशः तं इमं कृत्स्नं सर्वं भूतानां ग्रामः भूतग्रामः तं प्रकृतेः वशात् स्वां प्रकृतिं अवष्टभ्य आश्रित्य पुनःपुनः विसृजामि ॥ ८ ॥

१. ७. ४. २. तानि तत्सजातीयानि च ॥ मुष्टिपरिमितं व्रीहिं प्रदर्श्य अन्तर्वर्तमानः सर्वोऽपि व्रीहिरयमेवेति साजात्यादभेदं व्यपदिशंति हि लोके ॥ ३. ७. ६.

न तथा किंतु स्ववशां प्रकृतिं १ वशीकृत्य 'भूमिरापोऽनलो वायु'रित्युक्तरीत्या २ अष्टधा परिणमय्य ३ तामुपादनीकृत्य जननमरणवत्तयाऽनुभूयमानं सकलमपि भूतसमुदायं पुनःपुनः विविधं सृजामि ॥ उक्तं च मया ॥ ४ 'भूत्वा भूत्वा प्रलीयते'॥ इति ॥ किं सृज्यमानास्तथासर्जनमनुमन्येरन् इति चेत् तेतु न स्वतंत्राः ॥ अपितु प्रकृतेरधीनाः ॥ प्रकृतिप्राकृतसकलप्रेरकस्य अशब्दवाच्यस्य परमात्मनो वशाः ॥ तस्मात्तानहं विविधं सृजामि ॥ प्रकृतिः सृष्टेः करणं ॥ अहं तु कर्ता ॥ इदमेवोक्तं मया॥ 'एतद्योनीनि भूतानि'॥ ५ 'अहं कृत्स्नस्य जगतः प्रभव' इति॥ प्रकृत्या सृष्टिः प्रकृतौ लयः ॥ उक्तं चेदं मया॥ ६ 'अव्यक्तादीनि भूतानि' 'अव्यक्तनिधनान्येवे'ति ॥ अतो न कोऽपि विरोधः ॥ सप्तमोक्तस्य सृष्टिसंहारकर्तृत्वस्य पुनरत्रोक्तया ममैव तत्कर्तृत्वं नान्यस्य ॥ प्रकृतिस्तु करणं ॥ इतीदं तत्वं सम्यगवधारय ॥ ७ कस्मादिदमेवं निश्चितव्यमिति चेत् कौंतेयस्त्वं ॥ न च कुंतीशरीरात्तवोत्पत्तिस्त्वयोपलब्धा ॥ तथाऽप्याप्तवाक्यात् त्वया यथा निश्चिता तथा मत्तो जगतो जन्मलयौ मम वाक्यान्निश्चेतव्यौ ॥ यद्यपि ८ 'प्रभवः प्रलयस्तथे'ति सृष्टिसंहारकर्तृत्वमुक्तं ॥ तथाऽपि तत्र तत्केवलं ॥ अत्रतु उक्तानेकविशेषविशेषितमिति भेदः ॥ ८ ॥

अर्जुन ॥ यदि सर्वस्यापि जगतः सृष्टिसंहारादिकर्ता त्वमेव स्याः कुतस्तर्हि विविधं विषमं सृजसि रक्षसि संहरसि ॥ तथासर्जनादिना विषमोऽसि ॥ यदि घृणाशब्दिता कृपा तव स्यात् तर्हि तथा न कुर्याः ॥ कुर्याश्च तथा ॥ अतो निर्घृणस्त्वं ॥ तादृशस्य तव तेन कर्मणा पुण्यपापलेपश्च स्यात् ॥

कृष्णः ॥ न च मां तानि कर्माणि निबध्नंति धनंजय ॥
उदासीनवदासीनं असक्तं तेषु कर्मसु ॥ ९ ॥

नचेति ॥ हे धनंजय अर्जुन तानि कर्माणि उदासीनेन तुल्य उदासीनवत् आसीनं तेषु कर्मसु न सक्तः असक्तः तं मां न च निबध्नन्ति ॥ ९ ॥

१. अ ॥ अवष्टभ्य वशीकृत्य ॥ २. वि ॥ अष्टधा विपरिणमय्य ॥ ३. द्वै ॥ उपादानीकृत्य ॥
४. ८. १९. ५. ७. ६. ६. २, २८. ७. वि ॥ ८. ७. ६.

१ प्रकृतेर्वशात् त… जातानि तानि विषमसृष्ट्यादीनि **कर्माणि मां नैव** निब-ध्नंति वैषम्यनैर्घृण्यवंत… य तेन पुण्यपापाभ्यां न लिंपंति ॥ **उक्तं च मया** ॥ २ ' न मां कर्माणि लिंप… ' ॥ कुत इति चेत् तेषु कर्मसु **उदासीनवदहं वर्ते** ॥ यः प्रेक्षकः द्वयोर्विवदमान… न्यतरस्य जयं पराजयं वाऽनाकांक्षमाणः तत्कृतहर्ष-विषादाभ्यामसंसृष्टः स उ… मानः ॥ तेषु कर्मसु फलासंगेन अहंकारममकाराभ्यां च विरहितोऽहं ॥ यः फलेच्छ… अहंतया ममतया च युक्त कर्म करोति तं हि तत्कर्म निबध्नीयात् ॥ नाहं त… तानि करोमि ॥ अतो न **तानि मां निबध्नंति** ॥ उक्तं च मया ॥ ' न मे कर्मफले स्पृहे ' ति ॥ औदासीन्यान्न मम वैषम्यं नैर्घण्यं वा ॥ नापि पुण्यपापलेपः ॥ ३ तादृशं च मदीयमन्यादृशं सामर्थ्यं ॥ तथा च सूत्रं ॥ ४ ' वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ' ॥ इति ॥ ९ ॥

अर्जुनः ॥ ' अहं विसृजामी ' ति सृष्टिकर्तृत्वमुक्त्वा उदासीनोऽहं वर्ते इति कथमुच्यते ॥ कर्तृत्वमुदासीनत्वं चेत्युभयं विरुद्धं ॥ कर्तृत्वे कथमुदासीनत्वं ॥ उदासीनत्वे कथं कर्तृत्वं ॥ किंच ॥ प्रकृतेर्वशात् सृजामीति, प्रकृतिं यांतीति च, प्रकृत्या सृष्टिलयावुक्त्वा उदासीनोऽहमित्युक्त्या प्रकृतिरेव स्वतंत्रा सृष्ट्यादिकं करोतीति प्रतीयते ॥ तथा च सृष्टिसंहारादिकर्तृत्वं तस्या एवेति कथं ' प्रभवः प्रलयस्तथा ' इत्यादिकं ॥ वद ॥

**कृष्णः ॥ मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरं ॥**
**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

**मयेति** ॥ प्रकृतिः अध्यक्षेण मया हेतुना चरं च अचरं च चराचरं ताभ्यां सहितं सचराचरं जगत् सूयते सृजति ॥ हे कौंतेय अनेन हेतुना जगत् विपरिवर्तते ॥ १० ॥

**प्रकृत्या क्रियमाणानां सर्वेषां कर्मणां साक्षात् कर्त्री तस्याः प्रभुणा मया-**

१. प्रकृतेर्वशादित्यस्योभयत्रान्वयः ॥ २. ४. १४. ३. वि ॥ 'पश्य मे योगमैश्वर'मित्यस्यैव विवरणमिदमिति भावः ॥ ४. २. १. ३५.

प्रेरिता सा प्रकृतिः चराचरात्मकवस्तुनिचितं जगत्सृजति ॥ तत्तत्कर्मानुगुणं विविधं सृजति ॥ १ प्रयोज्यकर्त्री प्रकृतिः ॥ प्रयोजककर्ता चाहं ॥ इत्युभयरूप-हेतुनाऽनेन २ तत्तत्कर्मानुगुणमदीक्षणरूपहेतुना जगत् विशेषेण विविधं परिवर्तते पुनःपुनः सृष्टिलयपरंपरां प्राप्नोति । वेदशास्त्रपुराणादौ ३ प्रसिद्धोयमर्थः ॥ यद्यह-मुदासीनः स्यां तर्हि कर्ता न स्यां अस्मिवाहं सृष्ट्यादेः कर्ता ॥ अतो नाहमुदा-सीनः ॥ किंतु उदासीनसदृशः ॥ तस्य यथा हर्षविषादो न स्त तथा मम न तौ स्तः ॥ अत एव उदासीनतयाऽऽसीनमित्यनुक्त्वा 'उदासीनवदासीन'मि-त्युक्तं ॥ अतो न विरोध ॥ उदासीनवदित्युक्त्या, हर्षविषादराहित्येन कर्तृत्वाभ्यु-पगमात् न प्रकृतेः स्वातंत्र्यं शक्यं ॥ अतः 'प्रभवः प्रलयस्तथे'ति युक्तमुक्तम् ॥ १० ॥

अ ॥ अर्जुनः ॥ 'प्रभवः प्रलयस्तथे'ति सृष्टिसंहारकर्तृत्वमुक्तं ॥ तदेव पुनरत्रोक्त्या दृढीकृतं॥ ततश्च स्रष्टृत्वं संहर्तृत्वं चेश्वरस्य प्रतीयते ॥ न चेश्वरः स्रष्टा संहर्ता च भवितुमर्हति ॥ निर्गुणत्वेन निष्क्रियत्वेन सर्वधर्मविधुरत्वात् ॥ नच सर्वधर्मविधुरस्य स्रष्टृत्वादिकं संभवति ॥ अतः कथमिदं ॥ अस्तुवा स्रष्टृत्वं ॥ सा सृष्टिः किमर्था ॥ न तावद्भोगार्था ॥ भोक्तृत्वाभावात् ॥ नापि भोक्तुर्जीवस्य भोगार्था ॥ परमात्मनोऽन्यस्य जीवस्याभावात् ॥ नापि मोक्षार्था सृष्टि ॥ नित्य-मुक्तत्वाद्बंधाभावेन मोक्षाभावात्॥ अतः 'प्रभव' इति 'विसृजामी'ति चोच्य-माना सृष्टिरनर्थेति भाति ॥ न च निरर्था प्रवृत्तिस्सर्वज्ञस्य युज्यते ॥

कृष्णः ॥ स्वां स्वीयां स्वस्मिन् कल्पितां प्रकृतिशब्दितां मायां वशीकृत्य तस्याः विक्षेपावरणात्मकशक्तिप्रभावात् मायावीव गजतुरगभुजगादिकं भूतसमु-दायं विविधं सृजामि शुक्तिरजतादिकमिव दर्शयामि ॥ ८ ॥

यतो मायामयी सृष्टिः मायिकश्च भूतसमुदायः अतो मायाविनेव मया प्रद-र्श्यमानानि सृष्टिस्थितिप्रलयाख्यानि कर्माणि विषमाण्यपि न मां निबध्नंति ॥ नहि मायाविनः कर्माणि मायाविनं निबध्नंति ॥ मिथ्यात्वादेव तेषु कर्मस्वहमसक्त उदासीनश्च ॥ मायामयत्वात् सृष्टेर्न परमात्मनो निर्गुणत्वव्याघातः ॥ नापि प्रयो-जनाऽवश्यंभावः ॥ ९ ॥

१. द्वै ॥ २. वि ॥ ३. वि ॥ 'द्वि परिवर्तने' इति पाठ. ॥ प्रसिद्धयर्थो हि शब्दः ॥

कथमस्वतन्त्राया मायायाः सृष्टिशक्तिः इति चेत् ॥ साक्षिभूतेन मया संनिधिमात्राधिष्ठेकेन सृष्टिशक्तिं प्रापिता प्रकृतिश्चेतनाऽपि मयाधिष्ठिताऽधिष्ठिता माया गजतुरगभुजगादिकमिव जगदखिलं सृजति ॥ दृश्यते ह्यन्यस्य संनिधानादन्यत्र चेष्टा ॥ अनुभूयते चायस्कांतसंनिधानादयोधातौ चेष्टा ॥ मत्संनिधानेन निमित्तेन प्रकृत्या जगदिदं विविधं परिवर्तते पुनःपुनर्जायते ॥ मायायाः शक्तिरीदृशी ॥ अतो न काऽप्यनुपपत्तिः ॥ १० ॥

अर्जुनः ॥ यदि भवानीदृशविविधविचित्रविलक्षणमहामहिमाऽऽश्रयः ॥ तर्हि कुतो जारश्चोरः प्राकृतो मानुष इति भवंतं अवजानंति ॥

कृष्णः ॥ अवजानंति मां मूढा मानुषीं तनुमाश्रितं ॥
परं भावमजानंतो मम भूतमहेश्वरं ॥ ११ ॥

अवजानंतीति ॥ मम परं भावं न जानंतः अजानंतः मूढाः मनुष्याणामियं मानुषी तां तनुं शरीरं आश्रितं महांश्चासावीश्वरश्च महेश्वरः भूतानां महेश्वरः भूतमहेश्वरः तं मां अवजानंति ॥ ११ ॥

यद्यपि १ भूतमहेश्वरोऽहं भूतानां ईश्वरा ब्रह्मरुद्रेंद्रादयः तेषामपीश्वरोऽहं ॥ तथाऽपि तादृशं मां केचिदवजानंति ॥ कुत इति चेत् मूढाः ॥ अविवेकिनस्ते ॥ कोऽसावविवेकस्तेषां इति चेत् परमः पुमानयं ' परित्राणाय साधूना'मित्युक्तरीत्या दुष्टनिग्रहशिष्टपरिपालनार्थं धर्मस्थापनार्थं चावतीर्ण इति, मम परमं याथात्म्यं न जानंति ते ॥ २ सदासद्भावादहं भूतः सर्वोत्तमत्वादहं महान् सर्वेश्वरत्वादहं ईश्वरश्च ॥ यदवजानंति न स तेषामपराधः ॥ अपितु ममापराधः ॥ यद्यहं स्वेन रूपेण लोकादमुष्मादिमं लोकमागतस्स्यां तर्हि न कोऽपि मामवजानीयात्॥ आराधयेयुश्च सर्वे परमादरेण ॥ निगूह्य रूपं मनुष्यशरीरसदृशं शरीरमाश्रितो यदहमागतः ततः किल मामजानंतोऽवजानंति ॥ लोकेहि कमप्यधिकृतं पुमांसं स्वरूपेण न जानंतो जानंतश्च लिंगमात्रेण लिंगविहीनं स्वरूपेणावस्थितं निजिघ्र-

१. महांश्चासौ ईश्वरश्च महेश्वरः भूतानां महेश्वरः तं ॥ २. भूतश्चासौ महांश्चासौ ईश्वरश्च भूतमहेश्वर न ॥

क्षुमवजानंति कस्त्वं किमिदं कुत इदमिति ॥ त्वं वा कुतस्तथाऽवतीर्णः स्वरूपेणैव कुतो नागतोऽसि इति चेत् यदि स्वरूपेणैवाहमागतः स्यां तर्हि मामपचारशंकया केऽपि नोपसीदेयुः ॥ अतः सर्वजनसमाश्रयणीयत्वाय सौलभ्यदयादाक्षिण्यादेः प्रदर्शनाय च मानुषीं तनुमाश्रितोऽहं ॥ १मम परभावः स्वयं यदहं भूतमहेश्वरोऽपि भूत्वा लोकानुग्रहाय मानुषरूपेणावतीर्णः ॥ लोके महामहिमवंतः प्रभवंतो महान्तोऽधिकृता लोकानुग्रहाय सौलभ्यादीन् गुणान् प्रदर्शयंतस्तत्र तत्र साधारणमनुजसमं पर्यटंति ॥ संलपंति च दयनीयनिहीनमनुजैस्समं ॥ शृण्वंति च परमेणाऽऽदरेण तदीयां विज्ञप्तिं ॥ परिहरंति च तदीयां दुर्गतिं ॥ अयमेव तेषां परभावः ॥ परत्वानुप्रविष्टं हि साधारणमनुजसमतया वर्तनं ॥ मनुष्यत्वाऽऽश्रयणरूपं परभावं न जानंति ॥ अतो न बहुमन्यंते ॥ प्रत्युत अवजानंति ॥ ते किल दैवोपहता वराकाः ॥ न तेषां वचनं प्रमाणीकुरु ॥ ११ ॥

अर्जुनः ॥ एवं त्वां अवजानतां किं फलम् ॥

कृष्णः ॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥
राक्षसीमासुरींचैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

मोघाशा इति ॥ रक्षसां इयं राक्षसी तां असुराणां इयं आसुरी तां चैव मोहयतीति मोहिनी तां प्रकृतिं स्वभावं श्रिताः विगतं चेतः येषां ते विचेतसः ते मोघा व्यर्था आशा येषां ते मोघाशाः मोघं कर्म येषां ते मोघकर्माणः मोघं ज्ञानं येषां ते मोघज्ञानाश्च भवंति ॥ १२ ॥

ये मामवजानंति तेषामाशा मोघा भवति ॥ वांछितं किमपि न लभ्यते ॥ लब्धमपि नश्यति ॥ तैः क्रियमाणानि कर्माणि भगवद्भक्तिविरहान्निष्फलानि ॥ जातमपि तेषां शास्त्राभ्यासवशाद्ज्ञानं नापरोक्षज्ञानाय प्रभवति ॥ २'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी' इति वक्ष्यमाणसाधनविरहात् ॥ ईदृशा ३भ-

१ः चि ॥ मानुषीं तनुमाश्रितं मां एतद्रूपं परं भावमजानंतः प्रत्युतावजानंतीत्यन्वयः ॥ २. १३. ११. ३. भवंतीति शेषः ॥

10

वंचिते ॥ कुत इति चेत् यतो १ विरुद्धमनस्काः २ विगतविवेकाः ॥ राक्षसीं हिंसाहेतुक्रोधप्रधानां तामसीं आसुरीं विषयभोगहेतुरागप्रधानां राजसीं च प्रकृतिमाश्रिताः ॥ अयं राक्षसां असुराणां च स्वभावः ॥ एतच्चित्यताम् बहवो दोषाः ३ कथ्यंते 'दंभो दर्प' इत्यादिना सच्चायं मोहं जनयति ॥ तेन च मदवज्ञानं ॥ तेन चोक्तानर्थप्राप्तिस्तेषां ॥ अतः परिहर दूरतस्तानप्रशस्तान् ॥ १२ ॥

अर्जुनः ॥ अवज्ञानं द्वेधा संभवति ॥ अवजानतामविवेकेन अवज्ञायमाने वस्तुनि दोषसद्भावेन च ॥ त्वदवज्ञाने त्वामवजानतामविवेको हेतुतयोक्तः ॥ 'अवजानंति मां मूढा' इति ॥ अवज्ञायमाने त्वयि दोषसद्भाव एव कुतो हेतुर्न स्यात् ॥

कृष्णः ॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ॥

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥

महात्मान इति ॥ हे पार्थ देवानां इयं दैवी तां प्रकृतिं आश्रिताः महान् आत्मा येषां ते महात्मानस्तु मां भूतानां आदिः भूतादिः तं न विद्यते व्ययः यस्य सः अव्ययः तं ज्ञात्वा न विद्यते अन्यस्मिन् मनः येषां ते अनन्यमनसः संतः मां भजंति ॥ १३ ॥

यदि मदवज्ञाने मयि दोषसद्भाव एव हेतुस्स्यात् तर्हि सर्वैरहमवज्ञायेय ॥ न च तथा ॥ किंतु केचिदेवावजानंति मां ॥ आराधयंति च केचित् ॥ यद्याराधका अविवेकिनः, अवजानंतश्च विवेकिनः, तर्हि विवेकिभिरवज्ञायमानत्वात् दोषसद्भाव एवावज्ञाने हेतुस्स्यात् ॥ नच तथा ॥ आराधयंति मां विवेकिनः ॥ अवजानंति चा विवेकिनः ॥ अतोऽवजानतां अविवेक एव मदवज्ञाने हेतुः ॥ के आराधयंतीति चेत् ४ महात्मानः आराधयंति ॥ कुत इति चेत् यतो दैवीं ज्ञानभक्तिवैराग्यादि-साधनसाधनहेतुभूतविवेकप्रधानां सात्विकीं प्रकृतिमाश्रिताः ॥ सोयं देवानां

१. हे ॥ २. अ ॥ वि ॥ ३. १६. ४. ४. महान् आत्मा अनुभावो येषां ते महात्मानः ॥

स्वभावः ॥ तन्नियताश्च षड्विंशतिर्गुणाः वक्ष्यंते १ 'अभयं सत्वसंशुद्धिः' इत्यादिना ॥ तेन च मां भूतानां सर्वेषां कर्तारं निर्विकारं अविनाशिनं च यथावज्जानंति ॥ तेन चांतः २करणं रागद्वेषादिविरहितं शुद्धं संपद्यते ॥ तादृशं चांतःकरणं मयि रक्तं अन्यत्र विरक्तं च भवति ॥ तादृशाश्च मामाराधयंति ॥ न साधारणा इमे ॥ अपि तु महांतः ॥ ३ विशेषश्च महानेषां ॥ एषां वचनमेव प्रमाणीकुरु ॥ त इव त्वमपि मामाराधय ॥ १३ ॥

अर्जुनः ॥ 'भजंत्यनन्यमनस' इति त्वदाराधनमभिहितं ॥ तच्च किं तत्प्रकारश्च कः ॥

**कृष्णः ॥ सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ॥**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥**

**सततमिति** ॥ नित्यं युक्ताः योगवंतः सततं सदा कीर्तयंतः यतंतः यत्नं कुर्वंतश्च दृढं व्रतं येषां ते दृढव्रताः नमस्यंतः नमस्कारं कुर्वंतश्च संतः मां भक्त्या उपासते ॥ ततं वाद्यं तेन सहितं इति वा ॥ १४ ॥

ते उपासनशब्दितां सेवां कुर्वन्ति ॥ सेवा च निरतिशयप्रीतिजनककर्मविशेषः ॥ सेवया हि प्रीतिर्जायते ॥ सैव भजनशब्दितमाराधनं ॥ तत्प्रकारश्चायं ॥ निरतिशयप्रेमप्रवाहरूप४भक्तिपूर्वकं मन्नाम५कीर्तनं, मद्विषयस्तोत्र ६ मंत्रोच्चारणं, मदर्चनादिकर्मसु तदनुकूलव्यापारेषु च प्रयत्नः, मत्प्रीतिजनकनानानियम७व्रतोपवासादिकरणं, एतेन प्रयत्नानां भगवतः प्रसादः संपादनीय इति सुदृढः ८संकल्पः मध्ये संभवतां दोषाणां परिहरणाय नमस्कारैः प्रसादनं, मनःशुद्ध्याधायक ९कर्मयोगाद्यनुष्ठानं, एकैकस्मिन्नपि मयि १० मनोयोजनरूपं मच्चिंतनं, इत्येवंप्रकारेण

१. ११. १. २. महान् शुद्धिमत्तया महनीयः आत्मा मनः येषां ते महात्मानः ॥ ३. तु शब्दार्थोऽयं ॥ ४. अस्य सर्वत्रान्वयः ॥ ५. ६. कीर्तयंत इत्यस्यार्थः ॥ ७. ८. व्रतशब्दार्थः ॥ ९. १०. 'नित्ययुक्ता' इत्यस्यार्थः ॥

मदाराधनरूपमद्भजनं कुर्वंत महात्मानः ॥ १ कांक्षंते च मुक्तौ नित्ययोगं ॥ २ वेदांतवाक्यार्थविचाररूपं कीर्तनं कुर्वंतः संशयविपर्ययपरिहाराय श्रुतस्यार्थस्य युक्तिभिरनुचिंतनरूपे मनन वर्तमानाः शमदमादिसाधनसंपन्नाः ॥ ३ 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनं ॥ अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनं' ॥ इत्युक्तभक्तिभेदानाचरंत मद्विषयकपरमप्रेमरूपया ४ भक्त्या सर्वदा संयुक्ताः महानुभावाः श्रवणमननोत्तरभाविना ध्यानयोगेन मां चिंतयंति ॥ इदमेव निदिध्यासनं ॥ फलं चास्य मोक्षप्रतिबंधकशुभाशुभमोक्षफलकं ज्ञानं प्रथमश्लोकोक्तं ॥ त्वमेवं मामुपास्व ।। तेन च ज्ञानवान् भव ॥ १४ ॥

अर्जुनः ॥ 'भजंत्यनन्यमनस' इत्याराधनमुक्त्वा तत्स्वरूपं तत्प्रकारश्चेत्युभयमभिहितं ॥ त्वदाराधकत्वेन त्वया गृहीताः केचन नैवंविधा दृश्यंते ॥ नचेमे कीर्तनं प्रयत्नं व्रतं नमस्कारान् वा कुर्वंति ॥ अपितु तूष्णीमासते ॥ कथं ते त्वदाराधकाः ॥ किंवा तैः क्रियमाणमाराधनं तत्प्रकारश्च कः ॥

कृष्णः ॥ ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ॥
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥

ज्ञानेति ॥ अन्येऽपि अन्ये तु ज्ञानमेव यज्ञः ज्ञानयज्ञः तेन च तेनैव यजंतः आराधनं कुर्वंतः संतः विश्वतः सर्वत्र मुखं तदुपलक्षितं रूपं यस्य सः विश्वतोमुखः तं मां एकस्य भावः एकत्वं तेन पृथक् भावः पृथक्त्वं तेन बहुधा बहुभिः प्रकारैः उपासते ॥ १५ ॥

उक्तेभ्य आराधकेभ्यो ५विशिष्टाः ॥ ६ ज्ञानेन तद्वाक्यार्थकचिंतनादिना च मत्प्रसादजनकोपायेन मामाराधयंति ॥ चिंतनं तेषां कीदृशमिति चेत् सर्वत्र

१. वि ॥ २. मधु ॥ भवेत्यतं ॥ ३. नमस्यंतश्चेति चकारेण भेदांतरग्रहणं ॥ ४. अस्य नित्ययुक्ता इत्यनेनान्वयः ॥ ५. अन्ये इत्यस्यार्थः ॥ ६. ज्ञानशब्दो ज्ञानतत्साधनोभयपरः ॥

स्थितं मां एकत्वेन चिंतयंति ॥ सर्वत्र १स्थितोऽहमेकः ॥ न स्थानभेदान्मम भेदः ॥ इति मां चिंतयंति ॥ तथाच सूत्रं ॥ २'न स्थानतोपि परस्योभयलिंगं सर्वत्र ही'ति॥ उक्तंच मया ॥ ३'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थित' इति ॥ वक्ष्यते च ॥ ४'अविभक्तं विभक्तेषु विभक्तमिव च स्थित'मिति॥ ५'अविभक्तं विभक्तेषु 'इति च॥ जगतो भिन्नत्वेन शुक्लनीलपीतादि६बहुरूपत्वेन उपासते ॥ तथोपासकाश्च 'दैव-मेवापरेयज्ञ'मित्याद्युक्तप्रकारेण यज्ञभेदमनुष्ठितवंतो ७बहवः ॥ 'नारायणरूपैक-मूर्तित्वेन वासुदेवादिचतुर्मूर्तित्वेन दशचतुर्विंशत्यादिमूर्तित्वेन शतसहस्रादि-मूर्तित्वेन चोपासते ॥ कीर्तनप्रयत्नव्रतनमनादिभिर्वैशिष्ट्यं प्राप्ता इमे॥ एषामुपासन-मेवं ॥ उपासते इत्यस्य प्रत्येकमन्वयः ॥

अ ॥ ८उपास्यं ब्रह्म उपासकोऽहं चेत्युभयमेकं तत्वं ॥ नानयोर्भेदः ॥ ब्रह्मैवाहं शिवोऽहमित्यादिरूपेण जीवपरमात्मनोरेकत्वमनुसंदधाना उत्तमाधि-कारिणो महात्मान एकत्वेन चिंतयंति ॥ एकमेव ब्रह्म पृथगग्न्यादित्यादिरूपेण भासते इति ब्रह्मैव मध्यमाधिकारिणः पृथक्त्वेनोपासते ॥ सर्वत्र व्याप्तं विश्वरूपं ब्रह्म ब्रह्मरुद्रेंद्रवरुणाग्न्यादित्यरूपैर्बहुभिः प्रकारैरुपासते ॥ तत्तत्फल-कामनया तत्तद्देवतांतरोपासका अधमाधिकारिण ९ इमे ॥ उक्तं च मया ॥ १० 'कां-क्षंतः कर्मणां सिद्धिं यजंत इह देवताः॥' इति ॥ ११ 'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंतेऽन्यदेवताः ॥' इति च ॥ मध्यमाः ब्रह्मैव अग्न्यादिरूपेण वर्तते इति अग्न्यादीन् ब्रह्मत्वेनाऽऽराधयंति ॥ अधमास्तु अग्न्यादीन् अग्न्यादित्वेना-राधयंति नतु ब्रह्मत्वेन ॥ वस्तुतो भगवतस्सर्वात्मकत्वात्तदाराधनं संपद्यते ॥ 'अत एवोच्यते ॥ 'आकाशात्पतितं तोयं यथा गच्छति सागरं ॥ सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥' इति ॥ वक्ष्यते चात्र ॥ 'मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयंते ॥' इति ॥ 'तेऽपि मामेव कौंतेय यजंती'ति च ॥ नतु तथेमे

१. सर्वतः सर्वत्र मुखं तदुपलक्षितसर्वावयवोपेतदिव्यमंगलविग्रहः यस्य तं ॥ सर्वत्र स्थित-मेति यावत् ॥ २. १. २. ११. ३. ६ ३१. ४. १३. १७. ५. १८. २०. ६. बहुभिः प्रकारैः ॥ ७. बहुप्रकारा अधिकारिणः ॥ ८. एकत्वेनेत्यादेर्व्याख्यानान्तरम् ॥ ९. भाष्यतात्पर्य-बोधिनीसुबोधिन्याद्यनुरोधेन ॥ १०. ४. १२. ११. ७. २०.

जानंति अतोऽधमा इम ॥ फलं चैषामंतवत् ॥ उक्तं च यथा ॥ १' अंतवत्तु फलं ते-षा'मिति ॥ वक्ष्यते च ॥ २' क्षीणे पुण्ये मर्त्यलोकं विशंती'ति ॥ ३' नतु मामभिजानंति तत्वेनातश्च्यवंति ते ॥' इति च ॥ यद्येव मेषां भजनं तर्हि महात्मानस्तु मां पार्थेत्यु-क्तानां महात्मनां कोटावनुप्रवेशः कथमेषां ॥ तत्रोकभजनस्य हि प्रकारवर्णनमिदं ॥ इति चेत् वेदप्रामाण्यं परलोकसद्भावं चानभ्युपगच्छद्भ्यो नास्तिकेभ्यो नितरां विशिष्टाः खल्विमे तदुभयमभ्युपगच्छंतः परमास्तिकाः ॥ अतो महात्मान एवैते ॥ जानंतीमे परमात्मानं सर्वोत्तमं समर्पयंति च देवतांतराराधनमंततो भगवाननेन प्रीयतामिति ॥ ४'नान्यदस्तीति वादिन' इत्युक्तास्तु' परमाधमाः॥ ५ यदीमे अपे-ऽपि कीर्तनादिकारिभ्योविशिष्टाः ॥ तर्हि कीर्तनादिकारिणामधमत्वमापद्यते ॥ तत-श्च नारदादीनामत्युत्तमानां अधमाधिकारिककीर्तनादिकरणप्रवृत्तिरयुक्ता स्यादिति चेत् उत्तमाधिकारिणः कीर्तनादिभिरुपासते ॥ तथोपासितुमसमर्थास्त्रिविधाः उत्त-मा मध्यमा अधमाश्चेति ॥ तत्रोत्तमाः एकत्वेनोपासते ॥ मध्यमाः पृथक्त्वेन ॥ अधमास्तु बहुधा ॥ अर्थस्तु पूर्वोक्तः ॥ ततश्च नारदादीनां कीर्तनादिकरणप्रवृत्ति-र्युक्ततमेति निरवद्योयं पंथाः ॥

वि ॥ कीर्तनादिभिरनंतरंगैरुपासमानाः अपूर्णोपासकाः ॥ पूर्णोपासकास्तु कीर्तनादिभिः ज्ञानयज्ञेन च मामुपासते ॥ देवनरतिर्यगादिभेदेन बहुप्रकारोपेत-सकलप्रपंचशरीरकं मां एकत्वेनोपासते ॥ भगवान् वासुदेवः एक एव सूक्ष्मचिद-चिद्वस्तुशरीरस्सन् स्थूलचिदचिद्वस्तु शरीरः स्यामिति संकल्प्य तादृशानेकवस्त्वा-त्मकप्रपंचशरीरकोऽवतिष्ठते इति मामुपासते ॥ उत्तमा इमे ॥ उपासते चैवमिमे भगवंतं मां ॥ १५ ॥

अर्जुनः ॥ ६ सृष्टिस्थितिसंहारकर्तृत्वरूपमाहात्म्यमुक्तं ॥ इतोऽप्यतिशयितं माहात्म्यं ब्रूहि ॥ ७ पृथक्त्वेन बहुधा विश्वतोमुखमित्युक्तं ॥ तत्कथं ॥ केन प्रकारेण सकलप्रपंच शरीरकोऽसि ॥ मां भजंतो महात्मानः मामवजानंतो मूढाः इत्युक्तं ॥ तत्कथं ॥ कथं त्वद्भजनत्वदवज्ञानाभ्यां महात्मानः मूढाश्च भवेयुः ॥ ब्रूहि तत् ॥

१. ७. २३. २. ९. २१. ३ ९. २४. ४. २. ४२. ५. मधुसूधनसरस्वतीकृतगूढार्थदीपि-कानुरोधेन ॥ ६. द्वै ॥ अ ॥ ७. वि ॥

**कृष्णः ॥ अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधं ॥**

**मंत्रोऽहमहमेवाऽऽज्यं अहमग्निरहं हुतम् ॥ १६ ॥**

अहमिति ॥ स्पष्टोऽर्थः ॥ १६ ॥

क्रत्वाद्यचेतनपदार्थानां स्वरूपसत्तानियामकः अग्न्यादित्यादिचेतनपदार्थानां स्वरूपसत्ताप्रवृत्तिनियामकश्चाहं ॥ अतस्तत्तच्छब्दवाच्योऽहं ॥ 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' ॥ इत्युक्तेः ॥ [1]क्रतुः दीक्षादिरवभृथान्तः कर्मकलापः ॥ यज्ञः देवतोद्देशेन हविषः प्रक्षेपः ॥ [2]क्रतुः श्रुतिचोदितः ॥ यज्ञः स्मृतिचोदितः ॥ [3]क्रतुः अग्निष्टोमवाजपेयादिः ॥ यज्ञः अहरहरनुष्ठीयमानो देवयज्ञपितृयज्ञभूतयज्ञमनुष्ययज्ञब्रह्मयज्ञरूपः ॥ क्रतुर्यज्ञश्चाहं ॥ स्वाहेत्युक्त्वा देवेभ्यो दीयमानचरुपुरोडाशादिरूपमन्नमहं ॥ स्वधेत्युच्चार्य पितृभ्यो दीयमानं स्वधाशब्दितमन्नमप्यहं[4]मेव ॥ रोगशमनाय रोगिभिः सेव्यमानं औषधशब्दितमन्नमहं ॥ [5]अविंधनधनंजयशब्दितजाठराग्नौ हूयमानं सर्वप्राणिनामन्नसामान्यं चाहं ॥ ओषधिप्रभवमन्नं चाहं ॥ न केवलमन्नादिरूपहविर्मात्रमहं ॥ किंतु सोमलताद्योषधिभवं हविश्चाहं ॥ येन देवेभ्यः पितृभ्यश्च दीयते स मंत्रोऽहं ॥ तत्प्रतिपाद्यः तन्नियामकश्चाहं ॥ आज्यरूपं हविश्चाहं ॥ यस्मिन् हूयते सोऽग्निरहं ॥ होमक्रिया चाहम् ॥ क्रत्वादीनां नियामकत्वात् क्रत्वादिरूपोऽहं ॥ १६ ॥

**कृष्णः ॥ पिताऽहमस्य जगतो माता धाता पितामहः ॥**

**वेद्यं पवित्रमोंकारः ऋक् साम यजुरेव च ॥ १७ ॥**

पितेति ॥ धाता पोषणकर्ता वेदितुं योग्यं वेद्यं ज्ञेयम् ॥ स्पष्टमन्यत् ॥ १७ ॥

१. द्वै ॥ २. अ ॥ ३. वि ॥ ४. एवशब्दस्य पूर्वत्र परत्र च संबंधः ॥ ५. वि ॥ औषे दाहके जठराग्नौ धीयते प्रक्षिप्यते इति औषधमिति निरुक्तिरिति भावः ॥ ६. एकैकज्ञानमपि भगवदुपासनमिति सूचयितुं प्रत्येकमहंशब्दः ॥

अस्य जगतः पिता माता पितामहः मातामहश्चाहं ॥ पितृमातृपितामह१मातामहभ्रातृपुत्ररूपेण सर्वविधबंधुत्ववानहं ॥ २ तत्रतत्र स्थित्वा तत्तच्छब्दवाच्यस्तत्तद्बंधुकार्याणि करोमि ॥ तेन तत्तद्बंधुरूपेण ३ पोषणकर्ताऽहं ॥ उपलक्षणमिदं ॥ राजगुरुदेवतादिरूपेण तत्तत्कर्मकर्ता चाहं ॥ समयविशेषे पित्रादिरूपं धृत्वा रक्षामि ॥ यथा त्रिशिरःपुरे ४ शंकरो मातृरूपो भूत्वाऽरक्षत्कामपि योषां ॥ अत एव मातृ-भूत इति प्रथा तस्य ॥ तत्तत्कर्मफलविधाता चाहं ॥ ज्ञेयं वस्त्वहं ॥ वक्ष्यते च ॥ ५ 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥ अनादिमत्परं ब्रह्मे'ति ॥ ६ 'वेदैश्च सर्वैरहमेव वेद्य' इति च ॥ ७ पावनं वस्त्वहं ॥ किंच ॥ ज्ञेयस्य वस्तुनः ज्ञेयत्वरूपयोग्यताप्रदः ॥ पवित्रस्य वस्तुनः पवित्रत्वरूपयोग्यताप्रदः ॥ ८ परमं पवित्रं हि ज्ञानं ॥ उक्तं च मया ॥ ९ 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' ॥ इति ॥ तस्य तादृशयोग्यताप्रदश्चाहं ॥ ओंपदवाच्योऽहं ॥ उक्तं च मया ॥ १० 'ओमित्येकाक्षरं ब्रह्मे'ति ॥ ११ 'ओंतत्सदिति निर्देश' इति च वक्ष्यते ॥ किंच ॥ प्रणवो वेदानामुत्कर्षाऽऽधायकः ॥ उक्तं च मया ॥ १२ 'प्रणवः सर्ववेदे'ष्विति ॥ तस्य तादृशयोग्यताप्रदश्चाहं ॥ ऋगादि१३वेदचतुष्टय १४ प्रतिपाद्योऽहं ॥ 'वेदैश्च सर्वैरहमेव वेद्य' इति वक्ष्यते ॥ ऋगादीनां तत्तद्योग्यताप्रदश्चाहमेव ॥ १७ ॥

१. पितामहशब्द उपलक्षणार्थः । अत्र, 'पितृमातृसुतभ्रातृबंधुमित्रादयोऽपि वा ॥ एकैकफललाभाय सर्वलाभाय केशवः' इति वचनमनुसंधेयं ॥ 'तायें तंदै येन्नु' इति गाथा चानुसन्धेया ॥ २. अत्र, तत्रतत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन् ॥ एक एव महाशक्तिः कुरुते सर्वमंजसे'ति वचनमनुसन्धेयं ॥ ३. धातृशब्दार्थः ॥ ४. त्रिशिरःपुरेश्वरः ओरयूरुग्रामवासिनीं कामपि अन्तर्वत्नीं मात्रा केवलं रक्ष्यमाणां अनन्यगतिकां वनितां तन्मातरि लालुगुडिग्रामं गतायां प्रसवसमये तया प्रार्थितो मातृरूपेणाऽऽगत्य ररक्षेति कथाऽनुसन्धेया ॥ ५. १३. १३. ६. १५. १५. ७. अत्र, पवित्राणां पवित्रं यो मंगळानां च मंगळं ॥ इति भारतोक्तिरनुसंधेया ॥ ८. पवित्रमित्यस्य व्याख्यानांतरं ॥ ९. ४. ३८. १०. ८. १३. ११. १७. २३. १२. ७. ८. १३. च शब्देनाथर्वांगिरसां ग्रहणं ॥ १४. वाच्यवाचकयोरभेदविवक्षया ॥

कृष्णः ॥ गतिर्भर्ता प्रभुस्साक्षी निवासश्शरणं सुहृत् ॥
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥

गतिरिति ॥ गम्यत इति गतिः प्राप्यं वस्तु अहं ॥ भर्ता धारकः अहं ॥ तिष्ठत्यस्मिन्निति स्थानं अहं ॥ निधीयते अस्मिन्निति निधानं अहं अव्ययं बीजं अहं ॥ स्पष्टमन्यत् ॥ १८ ॥

अस्य जगतः गतिरहं ॥ साक्षात्करणीयः प्राप्यफलरूपश्च ॥ उक्तं च मया ॥ 'तमाहुः परमां गति'मिति ॥ प्राप्यं यत् सुखरूपं फलं यच्च तदनुभवस्थानं तन्नियामकोऽहं ॥ भर्ताऽहं धारयिताऽहं ॥ धारणेन पोषकोऽहं ॥ उक्तरीत्या सर्वं कर्तुं प्रभुरहं ॥ तत्रतत्र प्रभवो ये तन्नियामकश्चाहं ॥ साक्षात् सर्वमीक्षमाणोऽहं ॥ अतः इदमिदमेवमेवं करणीयमिति मया ज्ञायते ॥ न तत्रान्योपदेशापेक्षा ॥ लोके कर्तुं प्रभवन् प्रभुरिदमिदमेवमेवं करणीयमिति परोपदेशेन ज्ञात्वा करोति ॥ नाहं तथा ॥ किंतु सर्वमपि स्वयमेव ज्ञात्वा करोमि ॥ लोके साक्षात्पश्यन् पुमान् कर्तुं न प्रभवति ॥ नाहं तथा ॥ किंतु ज्ञात्वा तत्तदनुगुणं कर्तुमपि प्रभवामि ॥ न केवलं धारयिता ॥ किंतु सर्वस्य मयि [1]निवसनान्निवासोऽप्यहं ॥ लोके स्वस्मिन्निवसन्तं जनं भयहेतूपगमाद्भीतं स्वापायसंभवभिया समये दूरीकुर्वन्ति ॥ नाहं तथा ॥ किंतु मयि निवसतस्सर्वस्यापि सर्वापत्परिहारेण भयाद्रक्षकः ॥ लोके प्रत्युपकारमपेक्ष्य समये कश्चित्कमपि रक्षति ॥ नाहं तथा ॥ किंतु सुहृत् ॥ अनपेक्ष्य प्रत्युपकारमुपकारी ॥ मत्तः सर्वमुत्पद्यते ॥ मयि मया लीयते ॥ स्थिति काले मयि तिष्ठति ॥ अतः प्रभवः प्रलयः स्थानं चाहं ॥ मयि कंचित्कालं उषित्वा नान्यत्र गच्छति ॥ किंतु मयि तिष्ठति ॥ मां विहायान्यत्र न गच्छति ॥ अत एव स्थानमहं ॥ ष्ठा गतिनिवृत्ताविति धातुः ॥ [2]उत्पत्तिस्थितिमरणानां नियामकत्वात्

१. निवसत्यस्मिन्निति निवासः ॥ २. प्रभवः उत्पत्तिः प्रलयः मरणं स्थानं स्थितिः इत्यर्थांतरम् ॥

सृष्टिकर्तॄणां स्थितिकर्तॄणां संहारकर्तॄणां नियामकत्वाच्च प्रभवादिशब्दवाच्योऽहं ॥ १यस्य कस्यचित् यत्र कुत्रचित् उत्पत्तिप्रलययोर्यत् स्थानं तदहमेव ॥ महाप्रलये सर्वस्य जगतः मदुदरे निधानान्निधानमहं ॥ कालांतरोपभोगाय यन्निधीयते शंखपद्मादिनिधिरूपं न तु तदहं ॥ २यदुत्पद्यते यच्च लीयते तदुत्पाद्यमुपसंहार्यं चेत्युभयमहं ॥ भूयः सृष्टिकाले स्वांतःस्थितस्य जगतो बहिर्व्यंजनाद्बीजमहं ॥ सृष्ट्यादिकार्यकर्तृत्वेऽप्यविकारित्वादव्ययं वस्त्वहं ॥ ३नाशरहितं बीजमहं ॥ न बीजं विना किमप्युत्पद्यते ॥ बीजस्य नश्वरत्वे कदाचिज्जगत्प्रवाहोच्छेदस्स्यात् ॥ मम नाशरहितबीजत्वाज्जगत्प्रवाहः कदाऽप्यनुच्छिन्नो मत्त उत्पद्यते ॥ एतादृशोऽहम् ॥ १८ ॥

कृष्णः ॥ तपाम्यहमहं वर्षं निगृण्हाम्युत्सृजामि च ॥
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

तपामीति ॥ हे अर्जुन अहं तपामि ॥ अहं वर्षं वृष्टिं निगृण्हामि ॥ उत्सृजामि च ॥ अहं अमृतं च मृत्युश्चैव ॥ सत् असच्च अहम् ॥ १९ ॥

सूर्यो हि सर्वस्य जगतः प्रवृत्तिनिवृत्तिहेतुः उदयति सूर्ये सर्वः प्रवर्तते ॥ अस्तमयति निवर्तते ॥ इति चेत् स सूर्यो मदधीनः ॥ अहमेव सूर्ये स्थित्वा सूर्यशब्दवाच्यस्तापयामि ॥ सूर्ये स्थित्वा रश्मिभिस्तपन् तत्रतत्र स्थितं रसं गृहीत्वा रश्मिष्वेव निक्षिप्य वृष्टिं निगृण्हामि ॥ समये संगृहीतं रसं वृष्टिरूपेण विसृजामि ॥ ४'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षती'ति श्रुतिः ॥ कदाऽप्यवर्षणे सर्वदा वर्षणे च न लोकः सुखमाप्नुयात् ॥ अतो रसं गृहीत्वा रश्मिषु निक्षिप्य वृष्टिं निगृह्य समये वृष्टिरूपेण विसृजामि ॥ जीवनहेतुरन्नरसरसायनादिरहं ॥ मरणहेतुः रोगापथ्यादिरहं ॥ अमर्त्यानाममरणहेतुः मर्त्यानां मरणहेतुश्चाहमेव ॥ कार्यं कारणं चाहं ॥ कस्यचित्किमपि विद्यते ॥ किमपि न

१. वि ॥ प्रभवप्रलयस्थानमिति विसर्गरहितः पाठः ॥ २. वि ॥ ३. अव्ययं बीजमित्येके ॥
४. ता. ७९.

विद्यते ॥ तस्य तदुभयमहं ॥ १ वर्तमानमहं अतीतमनागतं चाहं ॥ एवं तत्तच्छ-ब्दवाच्योऽहं तत्तच्छब्दलक्ष्योऽहं ॥ इदं ममातिशयितं माहात्म्यं ॥ एवमहं विश्वतो-मुखः एतादृशं मां एकत्वादिभिः प्रकारैर्महांत उपासते ॥ मामेतादृशं ज्ञात्वा ये उपा-सते महात्मान एव हि ते ॥ येऽवजानंति ते मदज्ञानादवज्ञानाच्च मूढा एव ॥ तेन ते उभये महात्मान इति मूढा इति प्रशस्यंते निंद्यंते च ॥ अतस्त्वं मामु-पास्व ॥ १९ ॥

अर्जुनः ॥ भगवंतमवज्ञाय देवतांतरं भजमानाः मूढाः ॥ भगवंतमेव भज-मानाः महात्मानः ॥ इत्युभयेऽभिहिताः ॥ तेषां फलभेदं ब्रूहि ॥ देवतांतरं भजमा-नानां गतिः कीदृशी ॥ भगवंतं त्वामेव भजमानानां गतिः कीदृशी ॥

कृष्णः ॥ त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ॥
ते पुण्यमासाद्य सुरेन्द्रलोकं अश्नन्ति दिव्यान् दिवि देवभोगान्॥

त्रैविद्या इति ॥ तिस्रः विद्याः अधीयते त्रैविद्याः यज्ञैः मां इष्ट्वा आराध्य सोमं पिबंतीति सोमपाः पूतं शोधितं पापं येषां ते पूतपापाश्च संतः स्वः स्वर्गस्य गतिः प्राप्ति तां प्रार्थयंते ॥ ते पुण्यं सुराणां इन्द्रः सुरेन्द्रः तस्य लोकः सुरेन्द्रलोकः तं आसाद्य प्राप्य दिवि स्वर्गे भवाः दिव्याः तान् दिव्यान् देवानां भोगाः देवभोगाः तान् अश्नन्ति अनुभवंति॥

२ ऋग्यजुस्सामरूपास्तिस्रो विद्या येऽधीयते केवलं तत्संबंधवंतः मुखतः-प्रतीयमानकाम्यकर्मतत्फलरूपार्थमात्रज्ञानवंतः ॥ उक्तं हि मया ॥ ३ 'वेदवा-दरताः पार्थे'ति ॥ ते सोमयागादिभिरिंद्रादीनाराधयंतो मामाराधयन्ति ॥ मच्छरीरभूतानां देवानामाराधनं शरीरिणो मम खल्वाराधनं ॥ सोमपानं कृत्वा तेन संक्षालितमलाः तत्कृतशुध्या ४ निर्धूतपापाः स्वर्गलोकगमनं प्रार्थयंते ॥

१. वि ॥ सत् विद्यमानं असत् अविद्यमानं तच्च अतीतं अनागतं चेति द्विरूपम् ॥
२. तिस्रो विदया अधीयते इति वा तिस्रो विदयास्त्रिविदयं त्रैविदयं वा तस्यै मे इति वा त्रैविदयाः ॥
३. २. ४२. ४. पापेभ्यः पूताः पूतपापाः ॥

स्वकृतकाम्यपुण्यकर्मफलभूतं देवेंद्रलोकं प्राप्य घशब्दितें तत्र लोके इतरभौम-विलक्षणान् देवयोग्यान् सुखसाधनभूतान् व्योमयानादीन् पदार्थान् तदनुभवजनितसुखानि चानुभवंति ॥ न देवानामाराधनं निष्फलम् ॥ २० ॥

अर्जुनः ॥ यदि देवतान्तराराधनमीदृशफलकं तर्हि तदाचरंतः कथं मूढाः सफलं कर्म कुर्वाणाः कथं मूढा भवेयुः ॥ अस्तु तदेव तेषां ॥ अस्ति तत्र का हानिः ॥

कृष्णः ॥ ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति॥
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभंते ॥ २१ ॥

त इति ॥ ते विशालं तं स्वर्गश्चासौ लोकश्च स्वर्गलोकः तं भुक्त्वा पुण्ये क्षीणे सति मर्त्यानां लोकः मर्त्यलोकः तं विशन्ति ॥ काम्यंत इति कामाः फलानि तेषु कामः इच्छा येषां ते कामकामाः एवं त्रयी वेदानां त्रयं तस्यां विद्यमानः धर्मः त्रयीधर्म तं अनुप्रपन्नाः अनुतिष्ठन्तः गतं च आगतं च अनयोः समाहारः गतागतं तत् लभंते ॥ २१ ॥

ते तं काम्यपुण्यकर्मलब्धं भौमभोगापेक्षया विपुलं स्वर्गलोकभवभोगं भुक्त्वा तत्साधने पुण्ये भोगेन क्षीणे सति कर्मशेषेण मनुष्यलोकं विशंति ॥ तथाच सूत्रं ॥ १ 'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां'मिति ॥ २ 'प्लवा ह्येते अदृढा यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म ॥ एतच्छ्रेयो येऽभिनंदंति मूढा जरामृत्युं ते पुनरेवापियन्ति ॥ अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पंडितंमन्यमानाः ॥ जंघन्यमानाः परियन्ति मूढा अंधेनैव नीयमाना यथांऽधाः ॥ अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यंति बालाः ॥ यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः॥

१. ३. १. ८. २. मुं १. २. ७.

नाकस्य पृष्ठे सुकृते तेऽनुभूत्वेमं लोकं हीनतरं चाऽऽविशंती'ति श्रुतिश्च ॥ १ कामनाविषयत्वात्कामशब्दितं फलं कामयमानाः सकामाः ऋग्यजुस्सामरूपास्त्रयो. वेदास्त्रयी तदुक्तं धर्मं आपाततःप्रतीयमानं काम्यकर्मरूपं अनुष्ठितवंतः संतः उत्करीत्या स्वर्गं प्रति गमनं तत आगमनं च प्राप्नुवंति ॥ अतो नश्वरफलकं काम्यकर्म हेयमेव ॥ तादृशं च कर्म कुर्वाणा मूढा एव ॥ इम एव २ 'अवजानंति मां मूढा' इत्युक्ताः ॥ उक्तं च मया ॥ ३ 'कृपणाः फलहेतव' इति ॥ ४ 'प्रवदंत्यविपश्चितः' इति च ॥ २१ ॥

अर्जुनः ॥ देवतांतरं भजमानानां मूढानां गतिरुक्ता ॥ भगवंतं भजमानानां गतिं ब्रूहि ॥

कृष्णः ॥ अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते ॥
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥

अनन्या इति ॥ ये जनाः न विद्यते अन्यः अन्यद्वा येषां ते अनन्याः संतः मां चिन्तयंत संतः मां पर्युपासते ॥ नित्यं अभियुक्ताः नित्याभियुक्ताः तेषां तेषां योगश्च क्षेमश्च अनयोः समाहारः योगक्षेमं तत् अहं वहामि ॥ २२ ॥

द्वै ॥ वि ॥ ५अन्यान् देवान् नश्वरफलप्राप्तिहेतुभूतान् विहाय मामेव ध्यायंतः तेन ध्यानयोगेन मामाराधयंति भक्त्या श्रद्धया च ये जनाः, सर्वदेशकालेषु सम्यक् मयि ६मनोयोगवतां तेषां योगक्षेमं अहं वहामि ॥ अप्राप्तं प्रापयामि प्राप्तं रक्षामि ॥ अप्राप्तं मोक्षसुखं प्रापयामि प्राप्तं च तत् पुनरावृत्तिराहित्येन रक्षामि ॥ 'अप्राप्तप्रापणं योगः क्षेमस्तत्परिरक्षणं' ॥ इत्युक्तेः ॥ न केवलमामुष्मिकयोगक्षेममात्रनिर्वाहकोऽहं ॥ किंतु ऐहिकयोगक्षेममपि वहामि ॥ न केवलं

१. काम्यत इति कामः फलं तत् कामयंते इति वा तस्मिन् कामो येषां ते इति वा कामकामाः ॥ २. ९. ११. ३. २. ४९. ४. २. ४२. ५. न विद्यते अन्यो देवश्चिंतनीयो येषां तेऽनन्याः ॥ ६. वि ॥ नित्ययोगं कांक्षमाणानाम् ॥

अधमा इव न कामैर्हृतज्ञाना' अल्पमेधसश्च ॥ अपि तु त्रैविद्यतया भगवन्माहात्म्यज्ञानवतः मेधाविनः अन्यथा 'सकामा अपि कुतो भगवंतं भजंते ॥ तेषां देवतांतराराधनेन फललाभ केवलं ॥ उक्तं च मया तत्र ॥ १ 'तस्याराधनमीहते ॥ लभंत च ततः कामा ति ॥ नतु पापपरिहारेण सत्वशुद्धिः ॥ इमे तु पूतपापाः ॥ ते फलमपेक्ष्य देवान् भजंते ॥ उक्तं च मया ॥ २ 'हृतज्ञानाः प्रपद्यंतेऽन्यदेवता' इति ॥ इमे तु मामिष्ट्वा तत् पार्थयन्ते ॥ लोके हि मूढाः फलमुद्दिश्य; उद्दिष्टफलमिदमिति प्रकाश्य च तद प्रभुं सेवंते कुशलास्तु वांछितं फलं दद्यादयमिति विश्वस्य सेवां कृत्वा संतुष्टं तं प्रभुं फलमर्थयन्ते ॥ अत एवात्र मामिष्ट्वा ततं स्वर्गतिं प्रार्थयन्ते इत्युक्तं ॥ नेषां सुखं तेषां सुखमिव ॥ किंतु स्वर्गेऽपि ततोऽतिशयितं ॥ अत एवात्र 'दिव्यान् देवभोगा'निति फलं विशेषितं ॥ यद्येवं तर्हि श्लाघनीयमेवामीषां फलं भाति ॥ अस्तुनाम तत् ॥ का हानिरिति चेत् अधमभोगापेक्षया अतिशयितं फलं अनुभूय भोगेन पुण्ये क्षीणे सति अधमप्राप्यमर्त्यलोकभोगापेक्षया अतिशयितं भोगं विशंति ॥ त्वया मां उत्तमं; ज्ञात्वा मामाराध्य ३ मां स्वर्गादिकमभ्यर्थ्य देवतांतरभजनजनितभोगापेक्षयाऽतिशयितं भोगमनुभूय ४ 'नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छती'ति ॥ ५ शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ६ अथवा योगिनामेव कुले भवति धीमता'मिति चोक्तन्यायेन समीचीनं जन्म लब्ध्वा क्रमेणामृतत्वाय कल्पन्ते ॥ नाधमानामिव नित्यं संसरणमेषां ॥ अतो नोत्तमाः नाप्यधमाः किंतु मध्यमा इमे ॥ २० ॥ २१ ॥

अनन्याश्चिंतयंतोमाम् ॥ २१ ॥

उत्तमास्तु सप्तमे मामपीत्यत्र मां देवानपीति योजनया सूचिताः ॥ अत्र अनन्या इति स्पष्टमुक्ताः ॥ एते किमपि ७ प्रयोजनमनुद्दिश्य मां ध्यायंतो मां सम्यगुपासते ॥ एतेषां ऐहिकसकलभोगलाभपूर्वकं मोक्षसुखलाभो भवति ॥ भागवतत्वे समानेऽपि कामनातदभावाभ्यां महान् फलभेदः ॥ निश्च

१. ७. २२. २. ७. २०. ३. अनुप्रपन्नाः ततः कामकामाः ॥ ४. ६. ४०. ५. ६. ४१. ६. ६. ४२. ७. न विद्यते अन्यत् प्रयोजनं येषां ते अनन्याः ॥

नश्वरफलकाम्यर्थनान्मध्यमाः ॥ स्तुत्याश्च भागवतत्वात् ॥ उत्तमास्तु सर्वथा स्तु-त्याः ॥ मत्तोषहेतु[१]रनन्यभाव एव ॥ न पुनः [१] कुलशीलादिकं ॥ अत एव 'ये जना' इति सामान्यशब्दप्रयोगः कृतः ॥ २२ ॥

अर्जुनः ॥ अग्न्यादित्यादिसर्वदेवताशरीरकोऽहं ॥ तास्तु देवताः मम शरीर-भूता इति [३] 'योयो यांयां तनुंभक्त' इत्यत्राभिहितं त्वया ॥ अत्र पुनः 'अहमग्निः' 'तपाम्यह'मित्यग्न्यादित्यरूपोऽहमित्यभिहितं ॥ ततश्च तदाराधनं त्वदाराधनमेव हि संपद्यते ॥ सतिचैवं 'अंतवत्तु फलं तेषां' 'मद्भक्ता यांति मामपी'ति सप्तमे 'गतागतं कामकामा लभंते' ॥ 'योगक्षेमं वहाम्यह'मित्यत्र च फलभेदोक्तिः कथं॥ देवतान्तरभजनस्य त्वदाराधनत्वेन 'मद्भक्तायांतिमामपी'ति 'योगक्षेमं वहाम्यह'-मिति चोक्तेन महता त्वदाराधनफलेनैव हि भाव्यमुभयेषां ॥ विरुद्धं हि स एवाह-मित्युक्त्वा मद्भजनं महाफलकं अतो मां भजत ॥ तद्भजनमल्पास्थिरफलकं अतो मा भजत तं ॥ इति वचनं ॥ अतो विरुद्धभाषी भवान् ॥

कृष्णः ॥ येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ॥
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥

येऽपीति ॥ येऽपि येतु भक्ताः संतः श्रद्धया अन्विताः युताश्च संतः अन्याश्च ताः देवताश्च अन्यदेवताः भजन्ते ॥ हे कौंतेय तेऽपि विधिः पूर्वः यस्य तत् विधि-पूर्वकं न विधिपूर्वकं अविधिपूर्वकं मामेव यजन्ति ॥ २३ ॥

सत्यं ॥ साधु पृष्टं ॥ वच्मि ते तत्वं ॥ शृणु ॥ अन्यदेवताः मां वा ये अभक्त्या अश्रद्धया भजंते न तान् प्रति प्रष्टव्यं वक्तव्यं वा ॥ निष्फलं हि तेषां कर्म ॥ ये

१. अ ॥ न विद्यते अन्यः भेददृष्टिविषयः येषां ते अनन्याः ॥ अनन्यत्वशब्दितं जीवब्रह्म-भेदं ब्रह्मैवाहमित्यनुसंदधाना इति यावत् ॥ २. अत 'व्याधस्याऽऽचरणं ध्रुवस्य च वयो विद्या गजें-द्रस्य का का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषं ॥ कुब्जायाः कमनीयरूपमधिकं किं तत्सुदाम्नो धनं भक्त्या तुष्यति केवलं न च गुणैः भक्तिप्रियो माधवः' ॥ इति श्लोकोऽनुसंधेयः ॥ ३. ७. २१.

श्रद्धया भक्त्या भजंते तान् प्रत्येवेदानीं वक्तव्यं ॥ वदामि ॥ शृणु ॥ अन्यदेवता भक्ता १ अपि ये भक्ताः श्रद्धयाऽन्विताश्च संतोऽन्यदेवताः २ भजंते ॥ तेऽपि मामेव भजंते ॥ तत्कृतदेवतांतराऽऽराधनं मदाराधनमेव ॥ तच्च ममेष्टं ॥ अत एव तां श्रद्धामहं वर्धयामि ॥ उक्तं च मया ॥ 'यो यो यां यां तनुं भक्त' इति ॥ 'श्रद्धां तामेव विदधाम्यह'मिति च ॥ हंत तर्हि कुतः फलभेदः ॥ मदुक्तमेवानुवदसि ॥ फलभेदे हेतुं ब्रूहि ॥ इति चेत् यद्यपि मदाराधनमेव तत् ॥ तथापि अहं यथा ज्ञात्वाऽऽराधनीयः न ते तथा ३ ज्ञात्वा मामाराधयंति ॥ न मद्भजनविष्णुकरीत्या-ऽऽराधयंति ॥ किंतु अविधिपूर्वकं तदाराधनं ॥ अतः फलभेदः ॥ २३ ॥

अर्जुनः ॥ कोऽसौ विधिः यत्पूर्वकं कृतं त्वदाराधनं महाफलकं स्यात् ॥ यद्राहित्येन त्वदाराधनमपि भूत्वा फलतो निहीनमन्याराधनम् ॥

कृष्णः ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥
नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्तिते ॥ २४ ॥

अहमिति ॥ अहं सर्वे च ते यज्ञाश्च सर्वयज्ञाः तेषां भोक्ता प्रभुश्चैव ॥ हि प्रसिद्धं ॥ ते मां तस्य भावः तत्त्वं तेन नतु नैव अभिजानंति ॥ अतः च्यवन्ति च्यवन्ते ॥ २४ ॥

ये देवानाराधयंति ते सर्वेश्वरं मां विहाय हि तानाराधयंति मां कुतो विजहति ॥ मदीययाथात्म्यानवगमात् ॥ ये मां यथावत् नैव सम्यक् जानंति अतोऽवहाय मामन्यान् भजंते कथं ते महत्फलं प्राप्नुयुः ॥ अतः फलभूतात् स्वर्गात् भ्रष्टा भवंति ॥ किं ते तद्याथात्म्यं यदज्ञात्वा त्वमाराधनीयः इति चेत् अहमेव सर्वेषां इंद्रवरुणरुद्रवस्वादित्यवैश्वानरादि४सर्वदेवतोद्देशकृतत्तद्यज्ञानां तत्तद्देवता-रूपेण भोक्ता स्वेन अधियज्ञरूपेण नियामकः फलदाता च ॥ प्रसिद्धमिदं वेदशास्त्र-

१. वि ॥ येत्विति पाठः ॥ तुः श्रद्धावदश्रद्धावतोर्विशेषसूचकः ॥ २. अन्यदेवताभक्ताः अन्यदेवताः भक्ताः इति समस्तं व्यस्तं च ॥ ३. विधिर्ज्ञानं शास्त्रविधिश्च ॥ ४. सर्वे च ते यज्ञाश्च-सर्वयज्ञाः तेषां ॥ सर्वेषां देवानां यज्ञाः सर्वयज्ञाः तेषां ॥

पुराणादौ ॥ इदं मदीयं याथात्म्यं ॥ १ अनेन रूपेण मदज्ञानाच्च्यवन्ते ॥ यदि मां, अयं सर्वदेवताशरीरकः सर्वांतर्यामी सर्वोद्देश्यकतत्तद्यागभोक्ता नियामकः फलदाता च ॥ देवाश्च सर्वे एतस्य शरीरभूताः परिवाराश्च ॥ देवानामन्येषां आराधनमेतस्य शरीराऽऽराधनं शरीरिण इव परितोषकरमिति ज्ञात्वा भक्त्याऽऽराधयेयुः तर्हि तदाराधनं मदाराधनं संपद्येत ॥ नैवं ज्ञात्वाऽऽराधयंति तान् ॥ किंतु मामिव स्वातंत्र्येण फलप्रदान् ज्ञात्वा आराधयंति ॥ अतः कृतं कर्म तेष्वर्पयंति न मयि ॥ अतो नश्वरं फलं तेषां ॥ मां यथावत् ज्ञात्वा मामेव साक्षादाराधयंति ये तेषां महत्फलं ॥ अतः फलभेदः ॥ राजभृत्याऽऽराधनं वस्तुतो राजाऽऽराधनरूपमपि न महते फलाय भवति ॥ किंत्वल्पाय फलाय ॥ साक्षाद्राजसेवनं तु महते फलायेति साक्षादसाक्षात्त्वभेदात्फलभेदोऽनुभूयते लोके ॥ २ येतु सकामा अपि मामेवाऽऽराध्य स्वर्गादिकमर्थयंते मध्यमा इत्युक्ताः ते मां पुमर्थशिरोरत्नमोक्षदाताऽयं नास्मात् क्षुद्रं फलमर्थनीयं निष्कामकर्मलभ्यज्ञानयोगादिमं प्राप्तानां तत् संकल्पमात्रलभ्यं इत्यज्ञात्वा क्षुद्रफलस्यैव दातारं मत्वा आराधयंति ॥ अत उक्तरीत्या च्यवंते ते ॥ अहमेवाऽऽराधनीयः ॥ अन्ययाजिनां सकामतया मद्याजिनां च पुनरावृत्तिः ॥ निष्कामतया मद्याजिनस्तु न पुनरावर्तते ॥ अतो निष्कामो मामुपास्व ॥ २४ ॥

अर्जुनः ॥ तत्तद्देवतायाजिनां 'देवान् देवयजो यांति' 'अंतवत्तु फलं तेषा'मिति तत्तद्देवतालोकप्राप्त्या अंतवत्फलमुक्तं ॥ स्वर्गलोकं प्राप्तानां अंतवत्फलं प्रपंचितं ॥ 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशंती'ति ॥ नान्ययाजिनः सर्वेऽपि देवतायाजिनः किंतु केचिदिंद्रवरुणवसुरुद्रादित्यमुख्यदेवतायाजिनः ॥ केचित्पितृदेवतायाजिनः ॥ केचित् भूतप्रेतादियाजिनः ॥ वक्ष्यते च ॥ ३ 'यजंते सात्त्विका देवान् यक्षरक्षांसि राजसाः ॥ प्रेतान् भूतगणांश्चान्ये

१. तस्य भोक्तुः प्रभोश्च भावस्तत्त्वं तेन ॥ २. 'त्रैविद्या' इत्यादिश्लोकद्वयस्य द्वितीययोजनानुसारेणेदं ॥ ३. १७. ४.

यजन्ते तामसा जनाः' ॥ इति ॥ तत्र देवतायाजिनो देवान् यांतीत्युक्तं ॥ पितृया-जिनां भूतादियाजिनां च का गतिः ॥ वद ॥

कृष्णः ॥ यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ॥
भूतानि यान्ति भूतेज्याः यान्ति मद्याजिनोऽपि मां ॥ २५ ॥

यांतीति ॥ देवेषु व्रतं येषां ते देवव्रताः देवान् यांति ॥ पितृषु व्रतं येषां ते पितृव्रताः पितॄन् यांति ॥ भूतेषु इज्या आराधनं येषां ते भूतेज्याः भूतेज्याः भूतानि यांति ॥ मां यजंतीति मद्याजिनः मामपि यांति ॥ २५ ॥

देवेषु विषये व्रतं नियमः आराधनं देवान् यजामह इति संकल्पश्च येषां ते तान् इष्ट्वा तान् प्राप्य तल्लोकेषु सुखमनुभूय पुनरावर्तंते ॥ एवं पितृव्रताः पितृ-निष्ठा तान् प्राप्य पुनरावर्तंते ॥ भूतेषु भूतप्रेतपिशाचप्रमथगणेषु विषये इज्या-शब्दितमाराधनं येषां ते भूतानि प्राप्य पुनरावर्तंते ॥ अंतवत्त्वेषां फलं ॥ 'देवान् देवयजो यांति' 'भुक्त्वा स्वर्गलोकं' 'मर्त्यलोकं विशंती'त्युपलक्षणं ॥ तस्यैव प्रपंचोऽयं ॥ सकामा मद्याजिनस्तत्तत्फलानुभवाय तं तं लोकं प्राप्य अंते मामपि यांति ॥ निष्कामा मद्याजिनस्तु मामेवाऽऽप्नुवन्ति ॥ सत्यामिच्छायां संकल्पमात्रा-द्देवान् पितॄन् भूतानि च प्राप्नुवंति ॥ यद्यपीदं चतुर्थपादोदितं 'मद्भक्ता यांति मामपी'त्युक्तमेव ॥ तथाऽपि न केवलं भक्तिशब्दिता प्रीतिरेव भगवत्प्रापिका ॥ अपितु भगवत्प्रीतिहेतुकर्मकरणसहितैवेति वक्तुं 'मद्याजिन' इति तत् प्रपंचितं ॥ वक्ष्यते च तदुभयावश्यकत्वं ॥ [1] 'मन्मना भव मद्भक्तो मद्याजी'ति ॥ तदेवं त्रैविद्या' इति श्लोकद्वयस्य 'अनन्या' इति श्लोकस्य च प्रपंचनं कृतं ॥ 'येऽपी'-त्यादि श्लोकत्रयेण ॥ २५ ॥

अर्जुनः ॥ अन्येषामल्पत्वादल्पफलप्रदत्वाच्च तद्भजनं सुकरं स्यात् ॥ तव महत्त्वात् महाफलप्रदत्वाच्च त्वद्भजनं दुष्करं स्यात् ॥ अतः कथं त्वद्भजने प्रवर्तेरन्॥

१. ९. ३४. १८. ६५.

अतो बिभेमि भवदीयमनन्यसाधारणं माहात्म्यं श्रुत्वा कथमहमेतादृशमहामहिमवंतं भगवंतं तमाराधयितुं शक्नोमीति ॥

कृष्णः ॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥
तदहं भक्त्युपहृतं अश्नामि प्रयताऽऽत्मनः ॥ २६ ॥

पत्रमिति ॥ यः पत्रं पुष्पं फलं तोयं जलं मे भक्त्या प्रयच्छति ददाति ॥ प्रयतः शुद्धः आत्मा मनः यस्य सः प्रयताऽऽत्मा तस्य भक्त्या उपहृतं दत्तं भक्त्युपहृतं तत् अहं अश्नामि ॥ २६ ॥

न मद्भजनं दुष्करं ॥ किंतु परमसुकरं ॥ यतोऽहं सुलभः ॥ यो भक्त्या पत्रं पुष्पं फलं तोयं वा मे समर्पयति निष्कामतया शुद्धमनसस्तस्य भक्त्या समर्पितं तत्पत्रादिकमहं हृष्टया स्वीकृत्य तृप्यामि ॥ श्रीदामसुदामापरपर्यायकुचेल ब्राह्मणोपहृतपृथुकतंडुलकणवत्पत्रं फलं च भक्षयामि ॥ तोयं पिबामि ॥ पुष्पं स्वीकरोमि ॥ भक्तिमेवाहं पश्यामि नतु तत्तत्पदार्थगौरवलाघवादिकं ॥ प्रकटितं च मया मदीयमिदं सौलभ्यं दुर्वासःपरीक्षावसरे द्रौपद्या दत्त भक्ष्यस्थालीकंठलग्नं पत्रशाकं श्रीरामावतारे शबर्या तापस्या दत्तं फलं च अशितवता नक्राक्रांतेन मय्यर्पितस्वांतेन गजराजेन समर्पितं पुष्पं गृहीतवता चंद्रवंश्येन रंतिदेवेन राज्ञा दत्तं स्वल्पं जलं पीतवता ॥ प्रदर्शनार्थमिदं ॥ भक्त्या यद्भक्तैर्दीयते तदखिलमश्नामि ॥ भक्षिताश्च मया कुचेलेन दत्ताः पृथुकतण्डुलाः ॥ अन्ये देवा नाहमिव सुलभाः ॥ किंतु दुर्लभाः ॥ तेषां भजनं दुष्करं ॥ न ते पत्रादिभिरल्पैस्तृप्येयुः ॥ अमितमपेक्षेरन् ॥ आराधकैर्दत्तेन फलपुष्पादिनैव हि तृप्तिस्तेषां ॥ न तथा मम ॥ अहं तु नित्यतृप्तः ॥ भक्तैर्भक्त्या दत्तं नाऽऽत्मतृप्तये स्वीकरोमि ॥ किंतु करुणया तदुद्धारायैव ॥ ये स्वयं तृप्तास्ते प्रीत्या दत्तं फलपुष्पजलादिकं [१] दातृजनानुग्रहा-

१. अत्र, नैवाऽऽत्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते ॥ यद्यज्जनो भगवते विदधीत मानं तत्स्वात्मने प्रतिमुखस्य यथामुखश्री 'रिति ॥ 'स्वल्पमप्याहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥' इति ' याः क्रियाः संप्रयुक्ताः स्युरेकांतगतबुद्धिभिः ॥ ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वय 'मिति च श्लोका अनुसंधेयाः ॥

यैव स्वीकुर्वंति ॥ नाऽऽत्मतृप्तये ॥ ये अन्यद्दत्तेनाऽऽत्मनस्तृप्तिं कामयंते ॥ तेतु तदात्मतृप्तय एव स्वीकुर्वंति । ते हि स्वीक्रियमाणे लाघवं गौरवं च पश्येयुः ॥ तुलसीबिल्वादिरूपेण भक्त्याऽर्पितेनैकेन पत्रेणाहं तृप्यामि ॥ 'तुलसीदलमात्रेण जलस्य चुलकेन च ॥ विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलः' ॥ इत्युक्तेः ॥ एकमपि पत्रं पुष्पं फलं वा स्वल्पं तोयं वा मम तृप्तयेऽलं ॥ अत एव पत्रमित्याद्येकवचननिर्देशः । सुकरत्वाच्च मद्भजनं कार्यं ॥ अतो विहाय भीतिं परमसुलभं मां आराधय ॥ २६ ॥

अर्जुनः ॥ पत्रं पुष्पं फलं तोयं वा संपाद्य हि त्वदाराधनं कार्यमिति भाति ॥ तत्संपादनाऽशक्तस्य त्वदाराधनं कथं संपद्यते ॥

कृष्णः ॥ यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥

यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥

यदिति ॥ हे कौंतेय यत् करोषि यत् अश्नासि यत् जुहोषि यत् ददासि यत् तपस्यसि तत् अर्प्यत इत्यर्पणं मयि अर्पणं मदर्पणं कुरुष्व ॥ २७ ॥

यत्कर्म त्वमात्मार्थं देवतांतरोद्देशेन वा करोषि ॥ यच्च भक्ष्यभोज्यादिकमश्नासि ॥ यत् घृतदध्यादिकं देवतांतरोद्देशेन जुहोषि ॥ यत् गोभूतिलहिरण्यादिकं इष्टप्राप्तये अनिष्टनिवृत्तये महते यशसे च ददासि ॥ यत् कृच्छ्रचांद्रायणादिकं तपस्तप्यसे ॥ तत्सर्वं अंते [१] मय्यर्पितं कुरुष्व ॥ मदर्थं पत्रपुष्पादिसंपादनप्रयासो मास्तु ॥ आत्मार्थं अन्योद्देशेन च यत्क्रियते यदद्यते यद्धूयते यद्दीयते तत्तप्यते तस्य तस्य अंते मय्यर्पणं अनेन मया कृतेन भगवान् कृष्णः प्रीयतामिति कृते तत्तन्मदाराधनं संपद्यते ॥ तेन अहं तृप्यामि ॥ किमुत मदर्थमेव कृत्वा मय्यर्पणे कृते ॥ मय्यमीः क्रियमाणं मदाराधनं द्विविधं ॥ कामनया अकामनया वा देवतांतरमिष्ट्वा अंते तस्य कर्मणो मयि समर्पणं ॥ कामनया साक्षान्मदुद्देशेनैव कर्मकरणं चेति ॥ उभयमपीदं मदाराधनं ॥ कुर्वाणाश्चैवं क्रमेण मुच्यन्ते ॥ अतो

१. अर्प्यत इत्यर्पणं मयि अर्पणं मदर्पणं ॥ मयि अर्पणं यस्य तन्मदर्पणमिति वा ॥

महदिदं मदीयं सौलभ्यं ॥ 'सुखदुःखे समे कृत्वा युद्धाय युज्यस्वे'ति ॥ 'मयि सर्वाणि कर्माणि संन्यस्य युध्यस्वे'ति ॥ 'ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति य' इति च समर्प्य करणमुक्तं ॥ अत्र तु कृत्वा कृतस्य समर्पणमुच्यते ॥ तत्कथमिदमिति चेत् तत्र समर्पणं भगवति कर्तृत्वस्वातंत्र्यादेरनुसंधानं ॥ अत्रतु कृत्वा कृतस्य अनेन भगवान् प्रीयतामिति निवेदनरूपमिति भेदः ॥

वि ॥ कर्तुर्भोक्तुश्च तव आराध्यस्य देवतांतरस्य च मत्संकल्पायत्तस्वरूपस्थितिप्रवृत्तितया मदधीनत्वात्कर्तारं भोक्तारं च त्वां त्वदीयं कर्तृत्वं भोक्तृत्वं च आराध्यं देवतांतरं तदीयं आराध्यत्वादिकं च कृतं च तत्तत्कर्म इत्येतत्सर्वं मय्यर्पय मदधीनत्वेनानुसंधत्स्व ॥ अयमेव मदाराधनप्रकारः ॥ प्रकारेणानेन मामाराधय ॥ शक्यश्चाहमाराधयितुं ॥ उक्तं च मया मदीयं सौलभ्यं 'पत्रं पुष्प'-मिति ॥ ॥ २७ ॥

अर्जुनः ॥ त्वमुक्तरीत्या परमसुलभोऽसि ॥ त्वदाराधनमुक्तरीत्या परमसुकरतमं ॥ अतस्त्वदाराधनेन फलमुत्पद्यमानमल्पमेव स्यात्॥अनायाससाध्यत्वात्॥ आयासानुगुणमेव हि फलमुत्पद्यते लोके ॥

कृष्णः ॥ शुभाशुभफलैरेवं मोक्ष्यसे कर्मबंधनैः ॥
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥

शुभेति ॥ एवं संन्यासेन मदर्पणेन सहितः योगः कर्मयोगः तेन युक्तः शोधितः आत्मा मनः यस्य सः संन्यासयोगयुक्तात्मा त्वं शुभं च अशुभं च शुभाशुभे शुभाशुभे फले येषां तानि शुभाशुभफलानि तैः कर्माण्येव बन्धनानि तैः मोक्ष्यसे मुक्तो भविष्यसि ॥ विमुक्तः सन् मां उपैष्यसि ॥ २८ ॥

अनायाससाध्यमपि मदाराधनमतिमहते फलाय कल्पते ॥ तादृशं हि [illegible]दायमौदार्यं ॥ [1] संन्यासयोगयुक्तात्मा भव ॥ मदर्थं कर्म कृत्वा तस्य अंते मयि

१. संन्याससहितो योगः तेन, सन्यासयोगाभ्यां वा युक्तः आत्मा यस्य सः ॥

समर्पणं संन्यासः तद्युक्तः योगः कर्मयोगः ॥ संन्यासः कामादित्यागः तद्युक्त-योगः कर्मयोग तेन १ शोधितांतःकरणो भूत्वा तया चांतःकरणशुद्ध्या ध्यानयोगे मयि योजितांतःकरणो भूत्वा शुभाशुभफलोत्पादकैः बंधकैः कर्मभिः पुण्यपापरूपैः मुक्तो भविष्यसि ॥ कर्मरूपबंधनैर्विमुक्तो भूत्वा मां २ प्राप्स्यसि ॥ विमुक्ता हि प्रकृतिबंधात् मामाप्नुवंति ॥ न केवल कर्मबंधमोक्षः किंतु प्रकृतिबंधमोक्षोऽपि ॥ सच नातिचिरेण कालेन ॥ लोके महोदारस्य महतः प्रभोः अनायाससाध्येनाप्याराधनेन महतः फलस्य प्राप्तिर्दृश्यते ॥ अतोऽहमाराध्यः ॥ २८ ॥

अर्जुनः ॥ किं त्वमेव सर्वेषां सुलभः मोक्षप्रदश्च ॥ उत केषांचित् ॥ 'यो मे भक्त्या प्रयच्छति ॥ भक्त्युपहृतमश्नामि ' ॥ ' तत्कुरुष्व मदर्पणं ' ॥ ' एवं संन्यासयोगयुक्ताऽऽत्मा विमुक्ता मामुपेष्यसि' ॥ इत्युक्त्या भक्तिमतां कृतं कर्म त्वय्यर्पितवतां निर्धूत-कामादिदोषाणां शुद्धान्तःकरणानां केषांचिदेव त्व सुलभो मोक्षदश्चेति भाति ॥ तथाचेत् तव वैषम्यमापद्यते ॥ केषुचिद्रागः केषुचिद्द्वेष इति रागद्वेषवान् स्याः ॥ रागद्वेषवत्त्वे च कथमुपास्यः स्याः ॥ प्रत्युत तादृशोऽन्य इव त्याज्यः स्याः ॥ रागद्वेषवान् उपास्यश्चेति विरुद्ध ॥ कथमिदमुभयं त्वयि घटते ॥

कृष्णः ॥ समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ॥
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥

सम इति ॥ अहं सर्वाणि च तानि भूतानि च सर्वभूतानि तेषु सर्वभूतेषु विषये समः ॥ मे मम द्वेष्टुं योग्यः द्वेष्यः नास्ति ॥ प्रियः नास्ति ॥ येतु भक्त्या मां भजंति ते मयि ॥ तेषु च अहमपि ॥ २९ ॥

१. युक्त. शोधितः योजितश्च ॥ २. अ ॥ मामुपेष्यसि ॥ अहं ब्रह्मास्मीति साक्षात्करिष्यसि ॥ जीवन्नेव मुक्तो भविष्यसि ॥ सेयं जीवन्मुक्तिः ॥ पतिते चास्मिन् शरीरे एकीभवनरूपं विदेहकैवल्यं प्राप्स्यसि ॥

न मे देवनरतिर्यगादिनानाभेदभिन्नेषु ब्राह्मणक्षत्रियादिनानाभेदभिन्नेषु च चेतनेषु वा अचेतनेषु वा कुत्रचिद्रागः कुत्रचिद्द्वेषः॥ अपितु सर्वेषु भूतेषु विषयं समोऽहं ॥ द्वेषाभावात्कोऽपि जातिगुणक्रियाभिरपकृष्ट इति द्वेष्यो नास्ति ॥ रागाभावात् कोऽपि नैरुत्कृष्ट इति प्रियो नास्ति ॥ हंत तर्हि त्वमनुपास्य एव स्याः ॥ प्रसन्नस्सुखं दद्यात् अप्रसन्नो न किंचित् ॥ क्रुद्धश्चेद्दुःखं दद्यात् इति ह्युपास्यमुपासते लोके इति चेत् ये माहात्म्यज्ञानपूर्वकसुदृढस्नेहरूपया भक्त्या मां 'सततं कीर्तयंतो मा' मित्युक्तरीत्याऽऽराधयंति तेषां 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिता:' इत्युक्तविशेषवतां सुलभो मोक्षप्रदश्चाहं ॥ ते मयि वर्तिष्यन्त ॥ मुक्ता भूत्वा मत्समीपे वर्तिष्यंते ॥ इदमेवोक्तं मया ॥ 'विमुक्तो मामुपैष्यसी'ति ॥ अहमपि तेष्वेव वर्तेय ॥ [१]तदाधारक एव वर्तेय ॥ त एव ममाऽऽधारभूताः ॥ न तान् विना क्षणमपि वर्तेय ॥ अत एवोक्तं मया ॥ [२]'ज्ञानी त्वात्मैव मे मत'मिति ॥ यद्येवं तर्हि वैषम्यं रागद्वेषवत्त्वं च कथं परिहृतं स्यात् ॥ तदवस्थ एव हि स दोषास्तिष्ठेदिति चेत् भजंतो मे प्रियाः ॥ वक्ष्यते च ॥ [३]'यो मद्भक्तस्स मे प्रिय' इत्यादि ॥ [४]'मामेकं शरणं व्रज ॥ अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामी'ति ॥ द्विषंतो द्वेष्याः ॥ वक्ष्यते च ॥ [५]'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥ क्षिपाम्यजस्रमशुभानासुरीष्वेव योनि'ष्विति ॥ न तावता मम वैषम्यं रागद्वेषवत्वं च ॥ किंतु सम एवाहं ॥ प्रियेषु प्रीतिमत्त्वं द्विषत्सु द्वेषवत्त्वं च यदिदमेव हि [६]समत्वं ॥ अत एव शिष्टान् रक्षतो दुष्टान् शिक्षयतो राज्ञः समोऽयमिति प्रथा लोके ॥ अत एव सत्त्वसत्त्व

१. अ. ॥ भक्तानामंतःकरणे मदाकारता प्रतिपद्यते ॥ स्वसंबद्धवस्तुप्रतिफलनं स्वच्छस्य वस्तुनः स्वभावः ॥ अहं तत्र प्रतिफलामि ॥ स्वसंबद्धवस्तुनि प्रतिफलनं स्वच्छवस्तुसंबद्धस्य वस्तुनः स्वभावः ॥ अत एव सावित्रः प्रकाशः दर्पणे प्रतिफलति न घटादौ ॥ त्रि ॥ ते समानगुणवत्त्वाद्धामुक्तं मयि वर्तते ॥ अहमपि उत्कृष्टेष्विव तेषु विधेयो वर्ते ॥ २. ७. १८. ३. १२. १४. ४. १८. ६६. ५. १६. १९. ६' अत्र, 'समः प्रियस्सुहृत् ब्रह्मन् भूतानां भगवान् स्वयं ॥ इंद्रस्यार्थे कथं दैत्यान् अवधीद्विषमो यथा' इति (भाग, ६, १) परीक्षितः प्रश्नः सुररक्षणं असुरशिक्षणं च यदिदमेव समत्वं इति शुकमुनेरुत्तरं चेत्युभयमनुसंधेयम् ॥

स्वं पुण्यपापानुगुणं वर्तमानस्य यमस्य समवर्तीति प्रथा ॥ समत्वेनैवेदमेव भाव्यं ॥ समत्वं तु सर्वत्र साम्यरूपं दोषः ॥ अभोज्यान्नास्तत्र्वतः ॥ अत एव गीतमः ॥ 'समासमाभ्यां विषमसमे पूजातः' ॥ इति ॥ भजनमन्तरेण नान्यः प्रियोऽस्ति ॥ द्विषं तमन्तरेण नान्यो द्वेष्योऽस्तीत्यर्थः ॥ अग्निसमीपस्थानामेव शीतापनयनं करोति न दूरस्थानां ॥ १ कल्पद्रुमस्समाश्रितेभ्य एव वाञ्छितं ददाति ॥ न त्वनाश्रितेभ्य ॥ न तेन तौ दोषिणौ ॥ अपि तु स तयोः स्वभावः ॥ तथा ममायं स्वभावः ॥ अतो न विरोधगन्धः ॥ २९ ॥

अर्जुनः ॥ 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रिय' इत्युक्त्या जात्यादिभिरुत्कर्षो न प्रियत्वे हेतुः ॥ जात्यादिभिरपकर्षो न द्वेष्यत्वे हेतुः ॥ इति, 'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्' इत्युक्त्या भक्तिरेव प्रियत्वे हेतुः इति च प्रतीयते ॥ कथमिदं यदि भक्तिमात्रेण तव प्रियः स्यात् तर्हि दुराचारोऽपि भक्तिमांश्चेत्प्रियः स्यात् ॥ तेन माननीयोऽपि स्यात् ॥ नहि दुराचाराणामसाधूनां माननीयता दृश्यते ॥ अतः कथमिदम् ॥

कृष्णः ॥ अपिचेत्सुदुराचारो भजते मामनन्यभाक् ॥
साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥

अपीति ॥ दुष्टः आचारः यस्य सः दुराचारः सु अत्यन्तं दुराचारः सुदुराचारः तादृशोऽपि अन्यं भजतीति अन्यभाक् न अन्यभाक् अनन्यभाक् सन् मां भजते चेत् स, साधुरेव मंतव्यः ज्ञातव्यः ॥ स सम्यक् व्यवसितः ज्ञानवान् हि ॥ हि यस्मात् तस्मात् साधुरेवेति वा ॥ ३० ॥

२ यः देवतान्तरं विहाय ३ प्रयोजनान्तरमनुद्दिश्य मां भजते स मद्भक्तः ॥ तादृशो देवादिः प्रारब्धवशान्नितरां दुराचारतां प्राप्तोऽपि साधुरेवेति ज्ञातव्यः ॥

---

१. अत्र, 'सुरद्रुमो यद्वदुपाश्रितार्थदः' (इति भाग. १०. ३८.) श्लोकोऽनुसंधेयः ॥ २. द्वे ॥ द्वि ॥ यः भजते स दुराचारोऽपि साधुरित्यन्वयः ॥ ३. अन्यं देवं अन्यत् प्रयोजनं च न भजते इत्यनन्यभाक् ॥

साधुरेव अतो बहुमंतव्यः ॥ न तत्रानादरः कार्यः ॥ पूर्वं भक्तिमान् खलु स ॥ भक्तिश्च माहात्म्यज्ञानपूर्वकसुदृढस्नेहरसप्रवाहः ॥ अतो भगवद्विषये समीचीननिश्चयज्ञानवान् खलु सः ॥ अतो हेतोः साधुः माननीयश्च ॥ तादृशो महिमा भक्तेः ॥ न भक्तानां महिमा दुराचारेण हीयते ॥ ज्ञानं भक्तिश्च उत्कर्षे हेतुः नाऽऽचारादिकं ॥ किंच नितरां दुराचारोऽपि यः कश्चित् प्राक्तनपुण्यकर्मपरिपाकवशेन अनन्यभावेन भगवंतं मां भजते चेत् स दुराचारोऽपि साधुरेव ज्ञातव्यः ॥ माननीयश्च ॥ नाऽऽचारादिनाकृतर्थं ॥ अपि तु भगवद्भजनेनैव ॥ अतो दुराचारेणापि मया भगवान् भजनीयः ॥ तेनैवाहं कृतार्थः स्यामिति समीचीनो हि मनसोऽध्यवसायस्तस्य ॥ स एवोत्कर्षे हेतुः ॥ नाऽऽचारादिर्बाह्यः ॥ भगवंतं भागवतान्वा द्रष्टुं भगवद्गीता भागवतादिकं वा श्रोतुं च आहूयमानः कश्चित् न ममेदं सुकरं वाहं स्नात्वा धृत्वा पुंड् अशित्वा पयः पद्भ्यां आगत्य स्थित्वा उपविश्य वा द्रष्टुं श्रोतुं च शक्नोमि ॥ न मम तथाऽभ्यासः ॥ दूरत एवाहं वर्ते ॥ यद्भावि तद्भवतु इति प्रतिषेधति ॥ स पापीयान् गर्हणीयः ॥ भगवान् भजनीय इति ज्ञानानुदयात् ॥ यः कश्चिदेवं स्वासौकर्यमुद्भाव्य प्रतिषिध्या अस्नात्वा अधृत्वा पुंड्रं पीत्वा च पयः समारुह्य शकटादिकं आगत्य आसनं उपविश्य सुखेन शृणुतेति निर्बध्यमानः तथाचेदागमिष्यामीत्यागच्छति ॥ आगत्य च यथासुखं दुराचार एव पश्यति शृणोति ॥ तेन च तस्य भक्तिरुत्पद्यते ॥ भजते च नामकीर्तनश्रवणादिभिर्भगवंतं भक्त्या ॥ स दुराचार इति न गर्हणीयः ॥ अपि तु भक्त इति माननीयः ॥ दीनबंधोर्दयासिंधोर्भगवतो भजनं दुराचारमपि मां तारयेत् ॥ अतो भगवन् अनन्यकार्यमिति समीचीनज्ञानोदयात् ॥ अन्यथा स न भजेत् ॥ भजते चेत् ज्ञानी मतः साधुः अतो माननीयः ॥ भक्तिरेव माननहेतुः नान्यत् १ कुलशीलादिकं ॥ अतो मद्भक्ता मे प्रिया इति प्रशंसा कृता तेषाम् ॥ ३० ॥

अर्जुनः ॥ किमेवमुच्यते ॥ दुराचारोऽपि, मद्भक्तश्चेत्साधुः ॥, मद्भक्तौ दुराचारश्चेदपि साधुः ॥ उभावपि साधुत्वेन बहुमंतव्यौ ॥ इति सर्वज्ञेन परमात्मन

१. अत्र, व्याधस्याऽऽचरणमिति श्लोकोऽनुसंधेयः ॥

त्वया परमप्रमाणतमे भगवाशास्त्रे यद्युच्येत तर्हि सर्वेऽपि वैरं कुत्साचाराः खलु भवेयुः ॥ दुराचारस्य न कथनाप्युद्धृतिरुपायेन ॥ 'आचारहीनं न पुनन्ति वेदा' इत्यादेः ॥ १ 'नाविरतो दुश्चरितात् नाशांतो नासमाहितः ॥ नाशांतमानसो वाऽपि प्रज्ञानेनैनमाप्नुया'दित्यादेश्च ॥ असत्कर्म चिकीर्षन्तः कुर्वन्तश्च, तेषां साधुत्व-माचक्षाणं कंचन विचक्षणं किल मार्गमाणा दृश्यंते ॥ एवं वदता त्वया अपथे प्रवर्त्यमाना उत्सीदेयुरिमे लोकाः ॥ उत्सीदंतु नाम का नो हानिरिति त्वया न वक्तुं शक्यं ॥ धर्मसंस्थापनेन लोकोद्धाराय ह्यवतीर्णस्त्वं न लोकानामुत्सादनाय ॥ उत्सादनं च लोकानामनिष्टं तव ॥ उक्तं च त्वया ॥ 'उत्सीदेयुरिमे लोकाः न कुर्यां कर्म चेदह'मिति ॥ अतः कथमिदम् ॥

कृष्णः ॥ क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति ॥

कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥

क्षिप्रमिति ॥ क्षिप्रं शीघ्रं धर्मे आत्मा मनः यस्य सः धर्माऽऽत्मा भवति ॥ शश्वत् ऋथा शाश्वती तां शाश्वतीं शांतिं मोक्षसुखं निगच्छति प्राप्नोति ॥ मे भक्तः न प्रण-श्यति ॥ हे कौंतेय त्वं प्रतिजानीहि ॥ ३१ ॥

न दुराचारो लोकानामभ्यनुज्ञायते मया ॥ तस्य परिहरणाय सदाचारस्य स्थापनाय च किलावतीर्णोऽहं ॥ केचित्परित्यजंति मोहात्स्वमाचारं ॥ वक्ष्यते च ॥ २ 'नियतस्य तु संन्यासः कर्मणो नोपपद्यते ॥ मोहात्तस्य परित्यागः तामसः परिकीर्तितः' ॥ इति ॥ केचिदाचारस्य कर्तव्यतामङ्गीकृत्यापि कायक्लेशभयात् त्यजंति तं ॥ वक्ष्यते च ॥ ३ 'दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ॥ स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥' इति ॥ उभयेऽप्यासुरा इमे ॥ वक्ष्यते च ॥ ४ 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ॥ न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते' ॥ इति ॥ आसुरस्वभावानां तु फलमधोगतिरेव ॥ वक्ष्यते

१. का. २, २४. २. १८. ७. ३. १८. ८. ४. १६. ७.

च ॥ १ 'अघो मुञ्चति मामघा' इति । २ 'निवधायाऽऽसुरीमते'ति ॥ ३ 'पतन्तिनरकेऽशुचा'विति च ॥ ईदृशमहानर्थाऽऽवहासुरस्वभावनियतदुराचाराभ्यनुज्ञानं कथंकारं तन्निरसनपूर्वकं ४ 'अभयं सत्वसंशुद्धि'रित्यादिवक्ष्यमाणगुणप्रतिनियतदेवस्वभावप्रवर्तनार्थं प्रवृत्तेन मया क्रियत ॥ अतः कौंतेय त्वमिदमत्र तत्वं ५ सम्यक् जानीहि ॥ मम भक्तः दुराचारबुद्ध्या नानर्थमाप्नोति ॥ किंतु भक्तेः तन्मूलभूतसमीचीनव्यवसायस्य च प्रभावादचिरेणैव धर्मे निविष्टचित्तो भवति ॥ तेन च नित्यां विषयस्पृहानिवृत्तिं तथा च नित्यां विरोध्याचारनिवृत्तिं नितरामाप्नोति ॥ तेन च धर्मशब्दोदिते भगवति निवेशितमना भवति ॥ ततश्च नित्यां बुद्धेर्भवति निष्ठां तया च पुनरावृत्तिरहितां मुक्तिं च निस्संशयं विंदति ॥ सत्यमिदं ॥ मा त्वं मत्र शंकिष्ठाः ॥ यदि विवदंतस्तत्र केऽपि कुतर्काः तर्हि तान् प्रति तन्निरसनचणसुयुक्तिभिः न मे भक्तः प्रणश्यतीति स्वयमेव ॥ उद्धृत्य भुजं तत्रतत्र प्रतिज्ञां च कुरु ॥ विधिनिषेधातीतेन नित्यमुक्तेन, भक्तपरित्राणाय स्वप्रतिज्ञां त्यजता मया प्रतिज्ञाते न केऽपि विश्वसेयुः अतो विधिनिषेधानुवर्ती बद्धस्त्वमेवात्र प्रतिज्ञां कुरु ॥ परित्यागे दुराचारस्य भक्तिमार्गे प्रवृत्तिः सत्या च तस्यां दुराचारस्य त्याग इत्यन्योन्याश्रयदोषापत्त्या दुराचारः पुमान् केनाप्युपायेन भक्तिमार्गे प्रवर्तयितव्यः ॥ प्रवर्तितश्च भक्तिमार्गे तद्बलादचिरेणैव सदाचारो भगवदेकनिष्ठो भूत्वा मुक्तो भवति ॥ नैव नश्यति ॥ इदं मनसिकृत्योक्तं ॥ 'साधुरेव स मंतव्य' इति ॥ न पुनस्तत्र दुराचाराभ्यनुज्ञा ॥ किं न नश्यति दुराचारो दुराचारेण ॥ कथमिदं ॥ कृतार्थीकर्तुं दुराचारं भक्तिः कथं प्रभवेदिति चेत्, भक्तेर्महिमानं शृणु ॥ किं बहुना ॥ न केवलं दुराचार एव मद्भक्तो न नश्यति ॥ किंतु अतिदुराचारोऽपि प्राणसंकटमापन्नोऽपि स्वयमयोग्यस्सुदुर्लभमर्थमर्थयमानोऽपि मूढोऽपि अशरणोऽपि ७ नैव नश्यति ॥ किंतु भक्तेः प्रभावात् कृतार्थ एव भवति ॥

१. १४. १८. २. १६. ५. ३. १६. १६. ४. १६. १. ५. प्रति जानीहि इति द्वयोः पदयोः प्रत्येकं पृथगर्थाभिप्रायेण. ६. अंतर्णीतणिच् ॥ ७. इदं सकोपेन भगवता कृतमुत्तरार्धस्य योजनांतरम् ॥

यथा अजामिलःप्रह्लादः ध्रुवः गजेंद्रः भगीरथांबरीषद्रौपदीप्रभृतयोऽन्येऽपि ॥ अत एव खलूच्यते ॥ 'न वासुदेवभक्तानामशुभं विद्यते क्वचि'दिति ॥ तादृशो हि भक्तेर्महिमा ॥ सम्यमिदं जानीहि ॥ भक्तानामपि भोगैकनाश्यप्रारब्धकर्मफलानुभवरूपो नाशोऽस्त्येव ॥ अतो न नश्यतीत्यनुक्त्वा न प्रणश्यतीत्युक्तम् ॥ ३१ ॥

अर्जुनः ॥ आचारतो हीना अपि भक्तिमंतश्चेत् तत्प्रभावादचिरेण धर्मात्मानो भूत्वा मोक्षमाप्नुवंतीत्युक्तं ॥ वर्णतो गुणतश्च हीना भक्तिमंतश्चेत् का गति र्भवति तेषाम् ॥

कृष्णः ॥ मां हि पार्थ व्यपाश्रित्य येऽपिस्युः पापयोनयः ॥
स्त्रियो वैश्यास्तथा शूद्राः तेऽपि यान्ति परां गतिम् ॥ ३२ ॥
किंपुन र्ब्राह्मणाः पुण्याः भक्ता राजर्षयस्तथा ॥ ३३॥ ॥

मां हीति ॥ हे पार्थ पापा योनिः येषां ते पापेन योनिः येषां ते वा पापयोनयः ये या. स्त्रियः ये वैश्या. तथा ये शूद्रा मा व्यपाश्रित्य स्यु· स्थिताः तेऽपि परां गतिं याति ॥ हि प्रसिद्धम् ॥ पुण्य एषा अस्तीति पुण्याः पुण्यवंतः ब्राह्मणाः तथा भक्ताः राजान. ऋषय इव राजर्षय· किंपुन· ॥ ३३ ॥

१ ये पापेन चंडालत्वं प्राप्ताः पापा हि योनिस्तेषां पापहेतुकत्वात् पापसाधनत्वात् पापबहुलत्वाच्च ॥ तेऽपि मां भक्त्याऽऽश्रित्य यदि वर्तेरन् तर्हि परां गतिं प्राप्नुवंति ॥ स्त्रियः गुणतो वेदाध्ययनादिविरहाच्च निकृष्टाः ॥ शूद्राः वर्णतो वेदाध्ययनादिविरहाच्च निकृष्टाः ॥ वैश्याः कृष्यादिमात्ररताः साधनविरहान्निकृष्टाः ॥

१. पापेन योनिर्येषां पापा योनिर्येषा वा पापयोनयः ॥ २. अत्र किरातहूणांध्रपुलिंदपुल्कसा आभीरकंका यवनाः खशादयः ॥ येऽन्ये च पापा यदुपाश्रयाश्रयात् शुध्यंति तस्मै प्रभविष्णवे नमः ॥ इति भाग. २. ४. श्लोकः ॥ 'न शूद्रा भगवद्भक्ताः विप्रा भागवतास्स्मृताः ॥ सर्ववर्णेषु ते शूद्रा ये ह्यभक्ताः जनार्दने' ॥ इति श्लोकः ॥ 'कुल तरु' इति गाथा च इत्येतत्त्रयं अनुसंधेयम् ॥

ते सर्वेपि भक्त्या मां आश्रित्य यदि वर्तेरन् तर्हि मोक्षं प्राप्नुवंति ॥ प्रसिद्धश्चायमर्थः पुराणादौ ॥ सतिचैवं इत उत्तमाः ब्राह्मणा राजर्षयश्च भक्तिमंतश्चेत् ते परां गतिं प्राप्नुवंतीति किं पुनर्वाच्यं ॥ तेतु पुण्यवंतः पुण्या हि योनिस्तेषां ॥ पुण्यहेतुकत्वात् पुण्यसाधनत्वात् पुण्यबहुलत्वाच्च ॥ त्वंतु पुण्यो राजर्षिरसि ॥ मद्भक्त्या परां गतिं प्राप्स्यसीति किंवाच्यं ॥ पुमांसः पापेन स्त्रियो भवंति ॥ ब्राह्मणादयश्च शूद्रादयो भवंति ॥ पापेन स्त्रीत्वं शूद्रत्वं वैश्यत्वं च प्राप्ता ये तेऽपि भगवंतं मामनन्यभावेनाऽऽश्रित्य मोक्षमाप्नुवन्ति ॥ तथा वैश्याः शूद्राश्च [१] पुण्येन ब्राह्मणा राजर्षयश्च भवंति ॥ पुण्येन ब्राह्मणत्वं राजर्षित्वं च प्राप्ता ये ते भगवंतं अनन्यभावेनाऽऽश्रित्य मोक्षमाप्नुवंतीति किं वाच्यं ॥ इत्यप्यवधारय ॥ अत एव पापयोनयः स्त्रियो वैश्याः शूद्रा इति पुण्या ब्राह्मणा राजर्षय इति चोक्तं ॥ पुण्या इत्यस्य पुण्यहेतुकोत्तमजन्मवंत इत्यर्थः ॥ पापयोनय इत्यस्य प्रतिनिर्देशात् ॥ सतिचैवं स्वभावादेव याः स्त्रियो येच वैश्या शूद्राः ब्राह्मणाः राजर्षयश्च ते भगवदाश्रयेण परां गतिं आप्नुवंतीति किंवाच्यं ॥ त्वंतु स्वभावाद्राजर्षिरसि ॥ अतो नियतं मामाश्रित्य मुक्तो भविष्यसि ॥ अतो भक्तेरेतादृशमहामाहिमवत्वात् 'ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहं' मिति प्रशंसा कृता ॥ ३२॥ ॥

अर्जुनः ॥ अस्त्वेवं ॥ मया किं कार्यमिदानीं ॥ आज्ञापय ॥

कृष्णः ॥ अनित्यमसुखं लोकमिमं प्राप्य भजस्व मां ॥ ३३ ॥

अनित्यमिति ॥ न नित्यः अनित्यः तं न विद्यते सुखं यस्मिन् सः असुखः तं इमं लोकं देहं प्राप्य स्थितः त्वं मां भजस्व ॥ ३३ ॥

१. हे ॥ पुण्याः ब्राह्मणा इति वत् पुमांस इत्यनुक्त्या स्त्रीणां पुण्य सत्त्वेणापि न पुंस्त्वप्राप्तिरित्युक्तं भवति ॥ विस्तरस्तु तात्पर्यनिर्णयादिषु द्रष्टव्यः

मद्भजनानुकूलो दुर्लभो मानुषो देहः खलु त्वया लब्धोऽस्ति ॥ अतस्त्वं मां भजस्व ॥ श्वः परश्वो वा भविष्यतीति कालविलंबं माकृथाः ॥ नश्वरः खलु मानुषो देहः ॥ 'दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः ॥' इत्युक्तेः ॥ सुखानुभवानुकूलेऽस्मिन् मानवदेहे सुखमनुभोक्तव्यं कुतस्त्वद्भजनावकाशः इति चेत् विमृश ॥ नह्यस्मिन् देहे सुखं ॥ १ विहाय मद्भजनमन्यत्सुखं नैवास्ति ॥ सुखप्रतीतिस्तु भ्रांतिः ॥ उक्तं च 'दुःखे च सुखमानिनः' इति ॥ अतोऽनित्यमसुखं इमं देहं प्राप्य स्थितस्त्वं मां भजस्व ॥ ३३ ॥

१. अत्र वेदनल्प प्रायं नूरु' इति गाथा ॥ 'पुंसो वर्षशतं ह्यायुः तदर्धं चाऽजितात्मनः ॥ निष्फलं यदसौ रात्र्यां शेतेऽधं प्रापितस्तमः ॥ मुग्धस्य बाल्यकौमारैः क्रीडतो याति विंशतिः ॥ जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥ दुरापूरेण कामेन मोहेन च बलीयसा ॥ शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि' ॥ इति भाग. ७. ६. श्लोकाः ॥ 'नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया ॥ आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः ॥ जन्मभूमिर्हि सर्वाभूः श्मशानमपि मे पुरा ॥ चतुरशीतिलक्षेषु योनिभेदेषु चाभवं ॥ जातश्चास्मि मृतश्चास्मि संसारेऽस्मि पुनःपुनः ॥ जन्ममृत्यू पुनर्जन्म पुनर्मृत्युः पुनर्जनिः ॥ गर्भवासे महद्दुःखं मोहो दुःखं च जन्मसु ॥ बाल्ये दुःखं तथा शोकः पारवश्यं च मूढता ॥ हिताकरणमालस्यं अहिताचरणं तथा ॥ यौवने विषयासक्तिः तापत्रयानपीडितः ॥ चिंता रोगश्च वार्धक्ये मरणे तु महद्भयं ॥ आशया चाभिमानेन कामक्रोधादिसंकटे ॥ अत्युत्कटे महद्दुःखमस्वतंत्रश्च दुःखितः ॥ दुःखबीजमिदं जन्म दुःखरूपं च दुस्सहं ॥ निवृत्तिधर्मो नोपात्तो न योगज्ञानसाधनं ॥ अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियां ॥ धिगज्ञानं धिगज्ञानं धिक्कामक्रोधसंकटं ॥ संसारश्रृंखल धिग्धिक् आचार्यात् ज्ञानमाप्नुयां ॥ पुरा परजनस्यार्थे कृतं कर्म शुभाशुभं ॥ एकाकी तेन दह्यामि गतास्ते फलभागिनः ॥ नास्तिक्येन भयं त्यक्त्वा पापान्यकरवं पुरा ॥ भुंजामि तत्फलं ह्यद्य भविष्याम्यास्तिकस्त्वितः ॥ इति गर्भोपनिषत् ॥ 'वाडिनेन्' इति गाथा च इत्येतत्सर्वमनुसंधेयं ॥

मा मित्येवं भजनप्रकार उक्तः ॥ महात्मानस्तु मां पार्थेत्युक्तानां महात्मनां भजनप्रकारः खलु सः ॥ मद्योग्यताऽनुगुणं भजनप्रकारं ब्रूहि ॥

कृष्णः ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥

मन्मना इति॥ त्वं अहं परं अयनं आश्रयः यस्य सः मत्परायणः सन् मयि मनः यस्य सः मन्मनाः भव॥ मम भक्तः मद्भक्तः भव॥ मां यजतीति मद्याजी भव॥ मां नमस्कुरु ॥ एवं आत्मानं युक्त्वा योजयित्वा स्थितः सन् मामेव एष्यसि प्राप्स्यसि ॥ मां एष्यस्येव ॥ ३४ ॥

चंचलं मनो १ मयि योजय ॥ तेन मद्याजी भविष्यसि ॥ मदर्थं कर्तव्यानि कर्माणि कुरु ॥ तेन च शुद्धं मनो मयि सक्तं भवति ॥ मयि सक्तमना भव ॥ तेन च माहात्म्यज्ञानपूर्वकसुदृढस्नेहरूपभक्तिमान् भव ॥ मयि संभावितसकलदोषनिर्हरणाय मां नमस्कुरु ॥ मामेव परममाश्रयं मत्वा मयि मनो योजयित्वा स्थितस्त्वं मामेवैष्यसि ॥ मत्प्राप्तिरूपां मुक्तिं प्राप्स्यसि ॥ मामेष्यस्येव ॥ नात्र संशयः कार्यः ॥ वक्ष्यते च ॥ २ 'मय्येव मन आधत्स्व मयि बुद्धिं निवेशय॥ निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः' ॥ इति ॥ तस्मा[illegible] परमं पुमांसं मामनन्यया भक्त्याऽऽराध्य कर्मयोगादिभिस्त्वं परां गतिं प्राप्नुहीत्युपदिष्टमासेन मया ॥ अत्रा[illegible] ॥ [illegible]मिदम् ॥ ३४ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
कृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

इतीत्यादि पूर्ववत् ॥ राजविद्याराजगुह्यरूपस्यार्थस्य योगः संबंधो यस्मिन् सः राजविद्याराजगुह्ययोगः इति नाम प्रसिद्धः नवमोऽध्यायः इति संपूर्णः ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते राजविद्याराजगुह्ययोगाध्यायार्थ प्रदर्शको नवमः प्रतिबिंबः ॥

१. अत्र मयीत्यस्य रामानुजभाष्योक्तानि सप्तदश विशेषणान्यनुसंधेयानि ॥ २. १२, ८.

॥ श्रीगुरुभ्योनमः ॥

# अथ दशमोऽध्यायः ॥

---

संजयः ॥ पार्थमनःसंगतस्य मोहस्य सावशेषतां मत्वा तच्छेषनिरसनार्थमपृष्टोऽपि पार्थव्याजेन मंदानुजिघृक्षया सप्तमे 'रसोऽहमप्स्वित्यादिना नवमे च 'अहं क्रतु'रित्यादिना संग्रहेणाक्ता भगवतो विभूतीर्विस्तरेण वक्ष्यन् भगवान् पार्थसारथिरर्जुनस्य वक्ष्यमाणार्थशुश्रूषोत्पादनाय स्ववचनप्रशंसापूर्वकं तं प्रोत्साहयन्नभिमुखीकरोति ॥

श्रीभगवानुवाच—

कृष्णः ॥ भूय एव महाबाहो शृणु मे परमं वचः ॥
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥

भूय इति ॥ महांतौ बाहू यस्य सः महाबाहुः हे महाबाहो पार्थ अहं प्रीयमाणाय प्रीतिं कुर्वते ते तुभ्यं हिये काम्या हितकाम्या तया यत् वक्ष्यामि तत् परमं मे वच भूयएव पुनरपि शृणु ॥ १ ॥

हे महाबाहो पार्थ भूयोऽपि किंचिद्वक्ष्यामि ॥ भक्तिज्ञानोत्पत्तितद्वृद्धिरूपहितकरणेच्छया वक्ष्यामि ॥ ननु प्रयोजनेच्छया ॥ न ते जामितादोषः ॥ श्रुत्वा श्रुत्वा परमानंदं खल्वनुभवसि त्वं ॥ तादृशाय तुभ्यमहं वक्ष्यामि ॥ यदि मनागरुचिस्सूचिता स्यात् तर्हि पूर्वमेव समापितस्स्यादुपदेशः यच्च वक्ष्यामि तदवश्यज्ञातव्यत्वात् - व्यमदीयविभूतिरूपप्रतिपादनपरत्वात्प्रकृष्टं [1] संपत्प्रदं च ॥ तादृशं मे तद्वचनं

1. परा मा संपत् येन तत् परमं ॥

शृणु १ परमेणादरेण ॥ महाबाहुत्वात्कर्तुमकर्तुमन्यथाकर्तुमपि शक्तस्य तव वचनम: रहस्यतमोहापनोदनमसाध्यमभूत् ॥ मया खलु महता प्रयत्नेन तदपनोदाय प्रदर्श्यते महानयं पंथाः ॥ किमहो ॥ आश्चर्यमेतत् ॥ सर्वथानुग्राह्योऽसि ॥ १ ॥

अर्जुनः ॥ उपदिष्टास्त्वयाऽनेकेऽर्थाः परमया कृपया ॥ विदिताश्च मया ॥ यदि किंचिदवशिष्यते ॥ तर्हि तदन्यतः श्रोष्यामि ॥ कुतस्त्वयैव वाच्यं ॥

कृष्णः ॥ न मे विदुस्सुरगणाः प्रभवं न महर्षयः ॥
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

नेति ॥ सुराणां गणाः सुरगणाः मे मम प्रभवं प्रभावं न विदुः जानंति ॥ महांतश्च ते ऋषयश्च महर्षयः न विदुः ॥ अहं सर्वशः सर्वेषां देवानां महर्षीणां च आदिः ॥ हि प्रसिद्धम् ॥ २ ॥

मे मम महिमानं मे मम सकाशाज्जगदुत्पत्तिं मदीयां रामकृष्णादिरूपेणोत्पत्ति-मितरविलक्षणां प्रकर्षेण विविधरूपेण भवनं नानाविभूतिभिस्तत्र तत्राऽऽविर्भावं न जानंति सुरगणाः महर्षयश्च सर्वे सर्वैः प्रकारैः ॥ जानंतोऽपि केचित्कैश्चिदेव प्रकारैर्जानंति ॥ न सर्वैः प्रकारैः कोऽपि जानाति ॥ अतो मयैव वाच्यो मन्महिमा ॥ देवा महर्षयश्च ज्ञानाधिका जानीयुरेव हि ते प्रभवं ॥ अतो न विदुरिति कथ-मुच्यते इति चेत् सर्वेषां देवानां महर्षीणां च उत्पादकत्वबुद्धिज्ञानशक्त्यादि-प्रवर्तकत्वादिभिस्सर्वैः प्रकारैरहमादिर्भूत्वा कारणभूतो वर्ते ॥ अतो न विदुस्ते ॥ मत्त उत्पन्ना मद्दत्तमदधीनपरिमितज्ञानास्ते कथमनादेर्ममोत्पत्तिं अवाङ्मनसगो-चरापरिमितज्ञानशक्त्यादिमहामहिमवतो मम महिमानं च जानन्तु ॥ अतो २ न विदुः ॥ अतो अहमेव वक्ष्यामि ॥ शृणु तदवधानेन ॥ २ ॥

अर्जुनः ॥ कोऽसौ देवदेवर्षिभिरविदितो महिमा तव ॥ कुतस्त्वां सर्वेऽपि न

---

१. अत्र, शिष्यहितकरणेच्छया गुरुणा भूयोभूयो वक्तव्यं ॥ सत्यां शुश्रूषायां तां बुध्वा वक्तव्यं ॥ शिष्येण स्वसन्तोषः सूचनीयः॥ इति गुरुशिष्यधर्मस्सूच्यते॥ २. अत्र, 'यतो वाचो निवर्तन्ते॥ अप्राप्य मनसा सह' ॥ इति श्रु (तै. २. ४.) तिः॥ 'ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः ॥ नाराधितुं पुरुगुणैरधुनाऽपि पिप्रुः किं तोष्टुमर्हति स मे हरिरुग्रजातेः' ॥ इत्या-दयो भागवत(७. ९.) श्लोकाश्चानुसंधेयाः ॥

जानंति । कुतस्त्वद्विषयकज्ञानस्य दौर्लभ्यं । न विदुरित्यां सुरगणा महर्षयश्च ॥ त्वमेव त्वां वेत्थ । अतस्त्वदेव दुरवबोधस्त्वदीयः प्रभावः ॥ अतो माऽस्तु भूयोऽप्युपदेशः ॥ अलमेतावतः परिज्ञानेन ॥ किं फलं देवाद्यचिंत्यमहामहिमवतो महतो देवस्य तव माहात्म्यपरिज्ञानेन ॥

कृष्णः ॥ यो मामजमनादिं च वेत्ति लोकमहेश्वरं ॥

असंमूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

य इति ॥ यः मां न जायत इत्यजः तं न विद्यते आदिः यस्य सः अनादिः तं महांश्चासौ ईश्वरश्च महेश्वरः लोकानां महेश्वरः लोकमहेश्वरः तं च वेत्ति ॥ सः मर्त्येषु मनुष्येषु मध्ये न संमूढः असंमूढः सन् सर्वाणि च तानि पापानि च सर्वपापानि तैः प्र सम्यक् निःशेषं मुच्यते मुक्तो भवति ॥ ३ ॥

यः मां १ अनादिं आदिः कारणं तद्रहितं अत एव जन्मरहितं २ सर्वचेष्टकं सर्वेषामादिभूतं ३ सर्वचेष्टकस्य मुख्यवायोरप्यादिकर्तारं अत एव सर्वलोकाना मीश्वरा ये ब्रह्मादयस्तेषामपीश्वरं च उक्तवक्ष्यमाणमहामहिमवंतं च जानाति स क्वचिदपि विषये संशयविपर्ययरहितः सन् मद्विषयव्यवसायात्मकज्ञानेन साक्षात्कारेण च सर्वेभ्यः पापेभ्यो निरवशेषं मुक्तो भवति ॥ स्वज्ञानेन मोक्षप्रदत्वरूपो महानसौ मे महिमा ॥ मद्विषयकज्ञानस्य पापनिवृत्तिरूपमहाफलकत्वेन दौर्लभ्यं ॥ अत एव कश्चिदेव महानुभावो जानाति मां न सर्वे ॥ उक्तं च मया ॥ 'आश्चर्यवत्पश्यति कश्चिदेन'मिति ॥ 'आश्चर्यो ज्ञाता कुशलानुशिष्ट' इति श्रुतिश्च ॥ भक्तिज्ञानोत्पत्तितद्विवृद्धि प्रतिबंधकसकलपापमोचकत्वान्मद्विषयकज्ञानस्य वक्ष्य-

१. न विद्यते आदिर्यस्य तं ॥ २. द्वै ॥ अनश्चासावादिश्च तं ॥ ३. द्वै ॥ अनस्य वायोः आदिं ॥ ४. वि ॥ सजातीयविजातीयैरेकीकृत्य मोहः तद्रहितस्सन् यो मां सजातीयविजातीयस्वेतरसकलवस्तुव्यावृत्तं जानाति ॥ अजमित्यनेन जडात्तत्संसृष्टबद्धचेतनाच्च व्यावृत्तिः ॥ अनादिमजमिति मुक्तात् ॥ अनादित्वमजत्वेऽन्वेति ॥ मुक्तस्य अजत्वमादिमत् ॥ सर्वलोकमहेश्वरमिति नित्यमुक्तात् ॥

माणार्थंश्रवणेन संपाद्यं तद्ज्ञानं त्वया ॥ अतो वक्ष्यामि ॥ शृणु तदादरेण १ ॥ ३ ॥

अर्जुनः ॥ सर्वैः प्रकारैर्मद्ज्ञानं मोक्षाय भवतीत्युक्तं ॥ तच्च प्रकाराः उत्पादकत्वबुद्धिज्ञानादिप्रवर्तकत्वप्रभृतयः ॥ तत्र उत्पादकत्वं प्रागुक्तं श्रुतं च मया ॥ बुद्ध्यादिप्रवर्तकत्वं ब्रूहि ॥ बुद्ध्यादीनां केषां भावानां प्रवर्तकोऽसि ॥

कृष्णः ॥ बुद्धिर्ज्ञानसंमोहः क्षमा सत्यं दमश्शमः ॥
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥

अहिंसा समता तुष्टिः तपो दानं यशोऽयशः ॥
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

बुद्धिरिति ॥ बुद्धिः ज्ञानं न संमोहः असंमोहः क्षमा सत्यं दमः बाह्येन्द्रियनिग्रहः शमः अंतरिंद्रियनिग्रहः सुखं दुःखं भव उत्पत्तिः भावः सत्ता भव जन्मः न भावः अभावः मरणं भव. मनोविकासः अभावः मनसोऽवसादः भय च न भयं अभयं चैव न हिंसा अहिंसा तथा समस्य भावः समता तुष्टिः अलं बुद्धिः तपः दानं यश न यशः अयश. पृथक् भिन्नभिन्ना विधा प्रकारः येषां ते पृथग्विधाः एते भावा पदार्थाः भूतानां प्राणिनां मत्त एव मम सकाशादेव भवंति ॥ ४ ॥ ५ ॥

सर्वेषां प्राणिनां बुद्धिज्ञानादयः २ अबुद्ध्यज्ञानादयश्च धर्मा नानाविधा ३ लोकप्रसिद्धाः ॥ ते सर्वेऽपि मत्त एव भवंति नान्यस्मात् ॥ अतोऽहं लोकमहेश्वरः ॥ अयमेव बुद्ध्यादि प्रवर्तकत्वरूपो महिमा ॥ प्रकारेणानेन मां ज्ञात्वा ये भजंति तेषां बुद्ध्यादयो भवंति ॥ न भजंति ये तेषां अबुद्ध्यादयो भवंति ॥ अतोऽहं बुद्ध्यादिलब्धये भजनीयः ४ ॥ ४ ॥ ५ ॥

१. द्वै ॥ अत्र श्लोकद्वयेन पार्थस्य शुश्रूषोत्पादनं माहात्म्योक्तिस्तृतीये ॥ अ ॥ वि ॥ श्लोकत्रयेण पार्थस्य शुश्रूषोत्पादनं माहात्म्योक्तिश्चतुर्थे ॥ २. चशब्देन गृहीताः ॥ चकारोन्य उक्तसमुच्चये ॥ ३. एवकारार्थोऽयं ॥ ४. द्वै ॥ भवः जन्म ॥ भावः सत्ता ॥ अ ॥ अभावः मरणं ॥ वि ॥ भवः अनुकूलानुभवहेतुको मनसो हर्षः ॥ अभावः प्रतिकूलानुभवहेतुको मनसोऽवसादः ॥

अर्जुनः ॥ भृगुम[illegible] दय ऋषयः स्वायंभुवादयो मनवश्च प्राणिनामुत्पत्ति-स्थित्योः कर्तारोऽभिधीयन्त तत्र तत्र पुराणादिषु ॥ ब्रह्मा च सर्वकर्ता प्रथित. ॥ उक्तं च त्वया ॥ ' अव्यक्ताद्व्यक्तयस्सर्वाः प्रभवन्त्यहरागमे ॥ रात्र्यागमे प्रलीयंते तत्रैवाव्यक्तसंज्ञके ॥ भूतग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते ॥ रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ' ॥ इति ॥ सतिचैवं कथं भूतानां भवो जन्म भावः सत्ता च मत्त एवेत्युच्यते ॥

कृष्णः ॥ महर्षयस्सप्त पूर्वे चत्वारो मनवस्तथा ॥

मद्भावा मानसा जाताः येषां लोक इमाः प्रजाः ॥ ६ ॥

महर्षय इति ॥ लोके इमाः प्रजा येषां ते मनस इमे मानसाः जाताः पूर्वे सप्त महान्तश्च ते ऋषयश्च महर्षय तथा चत्वार. मनवः मत् मत्तः भावः जन्म येषां मम भावः ध्यानं येषां मम भाव इव भावः सङ्कल्पः येषां वा मद्भावः ॥ ६ ॥

मरीच्यादयः पूर्वमन्वंतरस्थाः सप्त महर्षयः ॥ ' मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतु. ॥ वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृता. ' ॥ इत्युक्तेः ॥ भृग्वादय-स्सर्गादिकालोत्पन्नाः सप्त महर्षय. ॥ भृगुं मरीचिमत्रिं च पुलस्त्यं पुलहं क्रतुं ॥ वसिष्ठं च महातेजास्सोऽसृजन्मनसा सुतान् ॥ सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ' ॥ इत्युक्तेः ॥ इति वा ॥ तथा चत्वारो मनवः स्वायंभुवस्वारोचिषरैवतोत्त-मनामानः ॥ ब्रह्मसावर्णिरुद्रसावर्णिधर्मसावर्णिदक्षसावर्णिनामानो वा ॥ सप्त महर्षयः तेभ्य. पूर्वे चत्वारः सनकसनंदनसनातनसनत्कुमाराः ॥ तथा स्वायंभु-वाद्याश्चतुर्दश मनवः ॥ इति वा ॥ पूर्वे सप्त महर्षयः ॥ तथा चत्वारः ब्राह्मणक्षत्रिय-वैश्यशूद्रभेदेन चतुर्विधाः मनवः ज्ञानाधिका देवाः ॥ इति वा ॥ ' मनवो बोध-वैशेष्यात् देवा ब्रह्मादयः स्मृता. ॥ विप्रादिवर्णभेदेन चत्वारो बहवोऽपि ते ' ॥ इत्युक्तेः ॥ ' विष्णोर्ब्राह्मणजातिस्सन् जज्ञे ब्रह्मा चतुर्मुख. ॥ वायुः सदाशिवोऽनंतो गरुडः शक्र एव च ॥ कामश्च वरुणश्चैव सूर्यसोमौ यमस्तथा ॥ एवमाद्याः क्षत्रि यास्तु देवा ब्रह्मविनिर्मिताः ॥ विवस्वदिंद्रवरुणविष्णुभ्योऽन्येऽदितेः सुताः ॥

रुद्रादन्ये तथा रुद्रा वायोरन्ये च वायवः ॥ अग्नेरन्ये च वसवो वैश्या इत्येव कीर्तिताः ॥ अश्विनौ पृथिवी चैव कालो मृत्यव एव च ॥ शूद्रदेवास्समुद्दिष्टाः देववर्ण इति स्मृतः' ॥ इत्युक्तेश्च ॥ ते मानसाः ब्रह्मणो मनसस्सकाशादुत्पन्ना मानसपुत्रत्वेन जाताः मानसेन आ प्रथमं जाता इत्येकं पदं वा ॥ तथापि मद्भावाः मत्तः भावो जन्म येषां ते तादृशाः ॥ ब्रह्मांतर्यामिणो ब्रह्मनाम्नो मत्त एवोत्पन्नाः ॥ ब्रह्मा तु [१] निमित्तमात्रं ॥ स्रष्टृत्वेन पालकत्वेन च प्रथितानां ऋष्यादीनां ब्रह्मणश्च मत्त उत्पन्नत्वेन मम मूलकारणत्वात् मत्तो जन्म सत्त्वेति च युज्यते ॥ मयि [२] भावो भावना येषां ते मद्भावाः मद्ध्यानलब्धविभवाः ॥ मत्तो लब्धविभवैस्तैः कृतं मत्कृतमेव ॥ अत उक्तं युक्तं ॥ मम [३] भावः संकल्पः स एव येषां ते मद्भावाः मत्संकल्पानुविधायिनः ॥ मत्संकल्पानुसारेण कृतं मत्कृतमेव ॥ अत उक्तं युक्तं ॥ लोके दृश्यमानाः इमाः सर्वाः प्रजाः एषां संतानभूताः पुत्रपौत्रादिरूपाः शिष्यप्रशिष्यादिरूपाः ॥ द्विविधो हि वंशः ॥ विद्यया जन्मना च ॥ तैस्तैः सृष्टानां पालितानां च सृष्टिपालनमूलकारणभूतत्वान्मम मत्त एव भावा भवंतीति युक्तमेव ॥ ६ ॥

अर्जुनः ॥ स्वज्ञानेन मोक्षप्रदत्वप्रभृतिमाहात्म्यान्युक्तानि किं तद्ज्ञानेन प्रयोजनं माहात्म्यज्ञानस्य पापनिवृत्तिः फलमित्युक्तमिति चेन् तया किं भवति तद्ब्रूहि ॥

कृष्णः ॥ एतां विभूतिं योगं च मम यो वेत्ति तत्वतः ॥
सोऽविकंपेन योगेन युज्यते नात्र संशयः ॥ ७ ॥

एतामिति ॥ मम एतां विभूतिं विविधभवनं ऐश्वर्यं वा योगं सामर्थ्यं च यः तत्वतः वेत्ति सः न विद्यते विकंपः यस्य स अविकंपः तेन योगेन युज्यते ॥ अत्र संशयः न विद्यते ॥ ७ ॥

मम एतां विभूतिं उक्तवक्ष्यमाणरूपेण विविधभवनं प्रभावं वा रूपस्य

१. द्वै ॥ अत्र, निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ॥ हिरण्यगर्भः शर्वश्च कालाख्यारूपिमस्तते' भाग १०. ७१. ८. त्यादिकं अनुसंधेयं ॥ २. अ ॥ ३. वि ॥

मद्दायत्तस्वरूपोत्पत्तिस्थितिप्रवृत्तित्वरूपमहैश्वर्यं वा योगं सामर्थ्यातिशयं कल्याण-गुणसंबंधं वा एतदुभयं यः यथावज्जानाति तस्य तेन ज्ञानेन १ अचंचलः २ ध्यान-योगः ३ अपरोक्षज्ञानयोगः ४ भक्तियोगो वा भवति ॥ अत्र संशयं मा कुरु ॥ माहात्म्यज्ञानफलं योगसिद्धिः ॥ माहात्म्यज्ञानेन पापनिवृत्तिस्तया योगसिद्धिः ॥ अतो ज्ञातव्यं माहात्म्यं मम ॥ ७ ॥

अर्जुनः ॥ माहात्म्यज्ञानेन योगसिद्धिरित्युक्तं ॥ तत्कथम् ॥

कृष्णः ॥ अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते ॥
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥

अहमिति॥ अहं सर्वस्य प्रभवत्यस्मादिति प्रभवः सर्वं जगत् मत्तः प्रवर्तते इति मत्वा ज्ञात्वा बुधाः मदीयमाहात्म्यज्ञानवन्तः संतः भावेन भक्त्या समन्विताः सहिताः संतः मां भजंते ॥ ८ ॥

सर्वस्य जगतः अहमुत्पादकः ॥ मत्तः स्थितिनाशादि बुद्धिज्ञानादि वा सर्वं जायते ॥ सर्वं जगत् चेष्टते वा इति मदीयैश्वर्ये ज्ञाते तादृशज्ञानवतां मयि भक्ति-र्भवति ॥ तत्पूर्वकं मां ध्यायंति ॥ मदीयैश्वर्ये ज्ञाते मयि याथात्म्यज्ञानाभिनिवेशो भवति ॥ तद्युक्ताश्च मां सेवंते ॥ तेन च मत्प्रसादादपरोक्षज्ञानलाभो भवति ॥ मदीयैश्वर्यज्ञाने मत्प्राप्तीच्छा भवति ॥ तया च प्रेरिता मां प्राप्तुं प्रीत्या मामा-राधयंति ॥ ८ ॥

अर्जुनः ॥ माहात्म्यज्ञानजन्यप्रीतिपूर्वकभजनप्रकारं ब्रूहि ॥ उक्तप्रकारेण भज-मानाः कीदृशाः स्युः ॥

कृष्णः ॥ मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परं ॥
कथयन्तश्च मां नित्यं तुष्यंति च रमंति च ॥ ९ ॥

१. अविकंप्येनेति पाठे चलयितुमशक्य ॥ २. द्वै ॥ ३. अ ॥ ४. वि ॥

कृष्णः—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ १० ॥

एवं भजमानाः मच्चित्ताः स्युः। मद्गत १ चक्षुरादीन्द्रियाश्च स्युः। एषां चक्षुरादीन्द्रियाणि मदितरविषये न प्रवर्तेरन्। मद्विषयक २ चेष्टावन्तश्च स्युः। मद्गत ३ जीवना वा। मद्भजननिमित्तजीवनाः। एषां जीवनस्य मद्भजनमन्तरेण नान्यत् प्रयोजनम्। परस्परं अज्ञातान् मद्विषयानर्थान् बोधेयुः। ज्ञातानर्थान् तदनुभवजनितानन्दातिशयेन पुनः परस्परं कथयेयुः। न 'स कथं सा कथ'मित्यादि निरर्थकं वचः संलपेयुः। एते अनेन भजनेन सुख ४ मनुभवन्ति। तेन च अन्यत्र अलंबुद्धियुक्ताश्च भवन्ति। भजनप्रकारोऽयम्। ईदृशाः स्युर्भजमानाः ॥ १० ॥

अर्जुनः—

प्रकारेणानेन भजमानानां किं फलं भवति। किं त्वं तेषां करोषि।

कृष्णः—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ ११ ॥

ये एवं अभ्यासात् सदा मयि निविष्टमनसो मया नित्ययोगं ५ कांक्षमाणाः प्रीतिपूर्वकं ६ मां भजन्ति। कीर्तिप्रतिष्ठाद्रव्यलाभाद्यनपेक्ष्य केवलया प्रीत्या मां भजन्ते। तेषां ज्ञानयोगमहं ददामि। ७ 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति श्रुतिः। ते च ज्ञानयोगेन मां प्राप्नुवन्ति। ये एवं

---

१ प्राणा इन्द्रियाणि। २ प्राणाश्चेष्टाः। ३ प्राणा जीवनम्। ४ वक्तारस्तुष्यन्ति। श्रोतारो रमन्ति। रा। वक्तॄणां विवक्षितभगवद्विषयकानेकार्थस्फुरणजनितानन्दातिशयेन अन्यत्र स्पृहाभावः। शं रा। श्रोतॄणां श्रूयमाणार्थमात्रवेदनात् तादात्विकानन्दानुभवमात्रम्। इति भावः।

५ रा। ६ म। शं। भजनं द्विविधम्। काम्यमकाम्यं च। तत्र काम्यभजनव्यावृत्तये प्रीतिपूर्वकमित्यस्य भजतामित्यनेनैव अन्वयो युक्त इति भावः।

७ शं। रा। प्रीतिपूर्वकमेव हि भजनम्। अप्रीतिपूर्वकत्वे भजनत्वस्यैवाभावात् प्रीतिपूर्वकमित्यस्य ददामीत्यनेनान्वयो युक्त इति भावः।

Pages from 113 to 206 Printed at the SRINIVASA PRESS, Tiruvadi.
15 G

भजन्ति तेभ्योऽहं बुद्धियोगं प्रीतिपूर्वकं ददामि । ते तु भक्ताः । अतीव मे प्रियाः । वक्ष्यते च 'यो मद्भक्तः स मे प्रियः । भक्तास्तेऽतीव मे प्रियाः ।' इत्यादि प्रियेभ्यो दीयमानं प्रीत्या खलु दीयते । भजनामेवमिदं फलम् । तेभ्यो मया मत्प्राप्तिसाधनभूतो ज्ञानयोगो दीयते ॥ ११ ॥

अर्जुनः—

ददामि बुद्धियोगं भजताम् । तेन ते मामुपयान्तीत्युक्तम् । अज्ञानजतमःप्रतिबन्धात् कथं त्वत्प्राप्तिः ? सत्यामपि कारणसामग्र्यां प्रतिबन्धकवशादुपरुध्यते हि कार्योत्पत्तिः ।

कृष्णः—

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ १२ ॥

लब्धबुद्धियोगानां यदि प्रतिबन्धकं अज्ञानजं तमः स्यात्, तर्हि तदुपरुन्ध्यादेव मत्प्राप्तिम् । न च तदस्ति । अतो मत्प्राप्तिर्निश्चिता । कः केन तन्नाशयतीति चेत् अहमेव तेन बुद्धियोगेन तन्नाशयामि । लब्धबुद्धियोगानां तेषां १ अनुग्रहायैव अज्ञानजं तमो नाशयामि । तमो मिथ्याज्ञानरूपम् । तच्च २ अज्ञानाज्जायते । अज्ञानं वर्धयति च । तमो भगवदितरविषयप्रावण्यरूपम् । तच्च ३ ज्ञानविरोधि । प्राचीनकुकर्मवशाज्जातम् । तदहं ज्ञानरूपदीपेन नाशयामि । तस्य च विलक्षणं तेजः । तमस्तु मनसि । त्वं तु वैकुण्ठादिषु । कथं त्वं तमो दीपेन नाशयसि । यत्र तमः तत्र स्थितो हि दीपः तन्नाशयेदिति चेदहं प्राणिनां हृदि स्थितः सन् ४ तत्तत्प्राणिहृदयसङ्गतं तमो विलक्षणप्रभावता ज्ञानदीपेन नाशयामि । मद्दत्तबुद्धियोगेन दीपेन तमस इव प्रतिबन्धकस्याज्ञानजतमसो नाशान्निर्विरोधैव मत्प्राप्तिस्तेन तेषाम् । मन्माहात्म्यश्रवणजनितया प्रीत्या मां भजमानानां मत्प्राप्तिसा-

१ सुखप्रापणमनुग्रहः । २ अज्ञानाज्जायते, अज्ञानं जनयति चेत्यज्ञानजम् । ३ न ज्ञानं अज्ञानं ज्ञानविरोधि । प्राचीनकुकर्मतो जातम् ।
४ रूपककल्पनेन ज्ञानदीपोऽयं अद्वैतभाष्ये वर्णितः । विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादिसंस्कारत्रयप्रज्ञावर्तिना विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः । इति ।

घनभूतं ज्ञानयोगमुत्पाद्य तेन प्रतिबन्धकं तमो नाशयित्वा मत्प्राप्तिरूपमोक्षं दत्त्वाऽनुगृह्णामि १ ।

सञ्जयः—

भगवन्मुखतो भगवन्माहात्म्यतद्वेदनफलश्रवणादमन्दमानन्दमवाप्तः पार्थः भक्तियोगजननार्थमुपदिष्टे सप्तमे 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' इति सर्वस्मात् परत्वं स्वस्य भगवानाह । कथं तत् ? स्यान्नाम स्वसजातीयोत्तमता । विजातीयोत्तमता तु कथम् ? दृश्यन्ते हि तस्यां तस्यां जातौ स्वजातीयोत्तमाः पदार्थाः । यथा वृक्षेष्वश्वत्थः, हयेषु उच्चैःश्रवाः, गजेष्वैरावतः, सर्पेषु वासुकिः इत्यादयः । सति चैवं कथं सर्वस्मात्परत्वं भगवतः सङ्गच्छेत । न हि कृष्णः वृक्षेषु हयेषु गजेषु सर्पेषु श्रेष्ठ इति युज्यते । न हि देवदत्तो हयेषूत्तमः इति व्यवहारो दृश्यते । अस्तु नाम । पृच्छाम्येनम् । यदि तत्तज्जात्युत्तमानां केषांचित् भावानां विद्यमानत्वात् कथं तव सर्वस्मात्परत्वं इति पृच्छ्यते । तर्हि किमयमेतावन्तं मदीयं महिमानं श्रुत्वाऽपि मम सर्वस्मात् परत्वे सन्दिग्धे इति स्यादयं कृष्णो विमनाः । संशयश्चासौ परिहरणीय एव । उक्तं चानेन 'संशयात्मा विनश्यति' इति । अतो भगवन् त्वत्सन्निधानविशेषेणात्र जगत्युत्तमतां प्राप्ताः पदार्थाः के के ? । इत्येवं प्रष्टव्यम् । पृष्टश्चैवं मत्सन्निधानविशेषादिम इमे स्वसजात्युत्तमतां प्राप्ताः इति यदि ब्रूयात् तर्हि उत्तमानामप्युत्तमत्वप्रदत्वात् सर्वस्मादुत्तमोऽयं इति निश्चेतुं शक्यम् ।

१ माहात्म्यश्रवणेन परोक्षज्ञानोत्पत्तिः सप्तमे । तज्जनितप्रीतिपूर्वकभजनमष्टमे । तेन परमानन्दानुभवो नवमे । तेन मत्प्रसादादपरोक्षज्ञानोदयो दशमे । अयमेकः क्रमः । योगेन परोक्षज्ञानरूपोपायेन । भजन्ते ध्यायन्ति । बुद्धियोगं अपरोक्षज्ञानरूपोपायम् । मामुपयान्ति चाष्टमे । न मां जानन्ति । इत्यर्थः । माहात्म्यश्रवणेन क्रमादपरोक्षवृत्तिः सप्तमे । ब्रह्मैवाहम् । अहमेव ब्रह्मेत्यनुसन्धानरूपोऽनुभवोऽष्टमे । तेन परमानन्दानुभवो नवमे। विपरीतप्रत्ययनिवृत्तिपूर्वकाखण्डाकारवृत्त्यनुभवो दशमे । अयमपरः क्रमः । योगेन अपरोक्षज्ञानशब्दितसम्यग्दर्शनलक्षणज्ञानयोगेन । भजन्ते ब्रह्मैवाहं अहमेव ब्रह्मेत्यनुसन्दधते । बुद्धियोगं बुद्धिः निश्शेषनिर्मुक्तविपरीतप्रत्ययं सन्मात्रैकविषयं सम्यग्दर्शनं तेन योगं वृत्तेः संयोगम् । अहमिदं अदः इत्यादिभेदप्रत्ययशून्यां ब्रह्मैकगोचरां अखण्डात्मिकां वृत्तिमिति यावत् इत्यर्थः ।

अत एवं पृच्छामीति निःशङ्कत्य, स्तूयते पुमान् उद्दिष्टः कार्यार्थिना अत एवं स्तुत्या-ऽभिमुखीकृत्य प्रष्टव्यम् । यदेशमयं व्यसार्षीत् । यदि किमपि इतोऽपि मया उपदिश्येत तमप्युपदेशं वि... देवायम् । अतः किमस्योपदेशने प्रयोजनमिति यत्नं मन्येत तर्हि न किमप्युपदेशेत् । अतो नाहं त्वदुपदेशं व्यस्मार्षम् । स्मृतिपथे वर्तते तवोपदेश इति ज्ञापयितुं तत्र किञ्चिदनूदितव्यमिति मत्वा, सारतमं किंचिदनुवदन् स्तुत्या तमभिमुखीकुर्वन् विभूतीस्त्वं मे ब्रूहि इति प्रष्टुमारभते ।

अर्जुन उवाच—

> परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
> पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १३ ॥
>
> आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
> असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १४ ॥

भवान् परं ब्रह्म । 'अथातो ब्रह्मजिज्ञासा' इति सूत्रे 'तद्विजिज्ञासस्व । तद्ब्रह्मे'ति श्रुतौ च जिज्ञास्यतयोक्तं परं ब्रह्म भवानेव । भवान् परं धाम । परमाश्रयो भवानेव । तेजसामुत्तमं तेजो भवानेव । भवान् परमं पवित्रम् । परमं पवित्रं भवानेव । कुतो मामेवं निरचैषीरिति चेत् त्वामृषयो नारदादयश्च पुरुषं शाश्वतं दिव्यं आदिदेवमजं विभुं चाहुः । अतः पूर्णषड्गुणत्वात् पुरूणां पापानां ओषणाद्वा पुरुषो भवान् । ओषणं नाशनम् । शश्वत् सदा भवः शाश्वतस्त्वम् । क्वचिदपि कदाचिदपि कथंचिदपि कुतश्चिदपि निर्विकारतया सदा एकरूपेणावस्थानात् शाश्वतो भवान् । दिवि परमे व्योम्नि भवो दिव्यो भवान् । नितरां द्योतनात् दिव्यो भवान् । आदिभूतत्वात् देवत्वात् देवानामादिभूतत्वाच्च आदिदेवो भवान् जन्मराहित्यादजो भवान् । विशिष्टतया भवनात् विविधरूपेण भवनात् विशेषेण भवनात् विशिष्टो विविधरूपो व्यापको विभुर्भवान् । अतो भवान् पुरुषत्वात् दिव्यत्वात् आदिदेवत्वात् अजत्वाद्विभुत्वाच्च परं ब्रह्म । तदेव हि पूर्णषड्गुणं स्मरणश्रवणादिमात्रेण पापनाशनं परमे व्योम्नि विद्यमानम् । तस्यैव ह्यादिदेवत्वम् । तदेव हि केनापि प्रकारेण जनिरहितं विभु च । शाश्वतत्वात् दिव्यत्वात् भवान् परमाश्रयः । परमाश्रय एव हि शाश्वतो दिव्यश्च भवितुमर्हति । दिव्यत्वात् परमं तेजो भवान् । परमं हि तेजः सदा द्योतनात्मकं स्यात् । सर्वेषां

पापानां नाशकत्वेन पुरुषत्वात् परमं पवित्रं भवान् । परमं हि पवित्रं वस्तु सर्वाणि पापानि नाशयेत् । मत्स्तोत्रकरणे भवतां हर्षः स्यादिति मामेवमृषयः स्तुवीरन् । तत्तु न श्रद्धेयमिति चेत् न केवलं ऋषयः । किं तु देवर्षिर्नारदोऽपि । नारदस्तु परमाप्तत्वादस्माकं नाविद्यमानं ब्रूयात् । नारदो मम परमः सुहृत् । अतो निरतिशया प्रीतिस्तस्य मयि । अतो मां स सदा स्तुयात् । न तच्छ्रद्धेयमिति चेत् । न केवलं नारदः । किन्तु असितो देवलश्च । देवलो धौम्यस्य ज्येष्ठभ्राता । असितो देवलस्य पिता । ऋषिभ्यः सर्वेभ्यः प्रकृष्टावेतौ । नाविद्यमानं ब्रूयाताम् । वक्तारः सहस्रं ब्रूयुरादरेण । लेखकः किमप्यविद्यमानं न लिखेत् । 'सहस्रं वद एकं मा लिख' इति हि लोकस्य व्यवहारः । यः कोऽपि ग्रन्थलेखकः स्वग्रन्थे मामेवमाह वा इति चेत् व्यासोऽप्येवमाह । व्यासो हि पुराणादीनां लेखकः । किं च निजपुत्रपाण्डुपुत्रतया परमानुग्राह्येषु नानृतमस्मासु ब्रूयात् । मम पौत्रेषु पाण्डवेषु स्निह्यत्ययं नितरामिति मयि नितरां प्रीतिर्व्यासस्य । अतो मम विषये किमपि किमपि वदेल्लिखेच्च । न तद्व्याख्यातुमर्हसि । किं च वक्तारो वदन्तु । लेखका लिखन्तु । न तावता तस्य श्रद्धेयता । किं मम विषये तैरुक्तं मयाऽङ्गीकृतम् । किमहं ते तथाऽभ्यधाम् । इति चेत् मे त्वं तथा स्वयमेव ब्रवीषि च । अवोचथाः १ । वक्ष्यसि च । अतोऽहं श्रद्धाय भवान् परं ब्रह्मेत्यादिकमभ्यधाम् । किं परं ब्रह्म परधामत्वादिकं मम मयाऽभिहितमिति चेत् 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति 'मत्तः परतरं नान्यत् किञ्चिदस्ती'ति 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति 'लभते च ततः कामान् मयैव विहितान् हितानि'ति 'जरामरणमोक्षाय मामाश्रित्य यतन्ति ये' इति 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इति 'मामुपेत्य पुनर्जन्मदुःखालयमशाश्वतम्' । नाप्नुवन्ती'ति 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति 'यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' इति 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना' इति 'भूतभृन्न च भूतस्थो ममात्मा भूत-

१ तूष्णींभूतं प्रति वदसीत्युक्त्या इदानीमेवाभिहितं त्वया । भूयोऽपि वक्तुकामोऽसीति प्रतीयते ।

भावनः' इति 'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्' इति 'विसृजामि पुनः पुनरि'ति 'मयाऽध्यक्षेण प्रकृतिः स्तूयते स चराचर'मिति 'एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम्' इति 'मन्त्रोऽह'मिति 'वेद्यं पवित्र'मिति 'प्रभवः प्रलय-स्थानं निधानं बीजमव्ययम्' इति 'योगक्षेमं वहाम्यहम्' इति 'मां हि पार्थ व्यपाश्रि-त्य' इति 'न मे विदुः सुरगणाः प्रभवं न महर्षयः' इति 'यो मामजमनादिं च वे-त्ति लोकमहेश्वरम् । असम्मूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते ॥' इति 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इति 'महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा' इति 'मद्भावा' इति 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति च त्वामभि-हितवता त्वया तव परब्रह्मत्वपरधामत्वपरमपवित्रत्वादिकमभिहितमेव । अतो ब्रवीमि निर्विशङ्कं परं ब्रह्म परं धाम पवित्रं परमं भवानिति ॥ १२, १३ ॥

कृष्णः—

आहुर्मामीदृशं महर्षयो नारदादयश्च । अहमप्यभ्यधाम् । तव तदखिलं तथ्यं भाति वा । श्रद्दधासि वा । तत्त्वं ब्रूहि । कथं वा मन्यसे ।

अर्जुनः—

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥

त्वद्विषये त्वया यन्मां प्रत्यभिहितं तदखिलमहं सत्यमेव मन्ये । त्वं केशशब्दित (?) ब्रह्मरुद्रनियामकोऽसि । त्वत्प्रेरणया हि सृजत्येकः । संहरत्यपरः । सति चैवं किं वाच्यमितरनियमनविषये । यद्येवं तर्हि किमिति मामेतादृशं सर्वे न जानन्ति इति चेत् हे [१] भगवन् पूर्णषड्गुण कृष्ण, ते [२] प्रभावं देवा दानवाश्च न जानन्ति । किमुतान्ये । उक्तं हि त्वया 'न मे विदुः सुरगणाः प्रभवम्' इति तत्सत्यं मन्ये

---

१ ऐश्वर्यस्य समग्रस्य

२ रा व्यक्तिं व्यञ्जनं प्रकाशनं त्वद्विषये यद्वक्तव्यं तस्य वचनं तत्प्रकारं न विदुः । अतः त्वमेव वक्तुमर्हसि इत्युपरिष्टात् प्रार्थ्यते ।

देवाः प्रियाः ज्ञानाधिकाश्च । प्रियैः प्रियस्य ज्ञातव्यो हि महिमा सत्यां शक्तौ । अतो देवा जानीयुः इति शङ्का स्यात् । तन्निवृत्तये देवा न विदुरिति युक्तं वक्तुम् । दानवा न विदुरिति कुतोऽभिधीयत इति चेत् प्रियाः प्रशंसितुं यावज्जानन्ति, ततोऽधिकमप्रियाः निन्दितुं जानन्ति । अन्तरवगाह्य सर्वस्योदन्तस्य यथावदवगमे हि यथावत् दूषयितुं शक्यं अतो द्वेषात् दूषका दानवा जानीयुरिति शङ्का स्यात् । तन्निवृत्तये न दानवा इत्युक्तम् । प्रसिद्धं सुरासुरविदितमहामहिमवत्त्वं तव ॥ १४ ॥

कृष्णः—

यदि देवादयो न जानन्ति तर्हि को जानाति मम प्रभावम् । यदि केनापि न ज्ञायते तर्हि मत्सद्भाव एव शङ्का स्यात् ।

अर्जुनः—

स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

त्वं आत्मानं जानासि । त्वमेव वेत्थ । नान्यः । स्वयमेव परोपदेशादिसाधनमन्तरेणैव आत्मनैव स्वेनैव स्वशक्त्यैव । सर्वैरविदितस्य वेदनं मम कथमिति चेत्, पुरुषोत्तमो हि भवान् । अवरैरविदितं उत्तमो जानीयादेव । कुतोऽहं पुरुषोत्तम इति चेत्, त्वं भूतानां उत्पादकोऽसि । उत्पादकोऽपि कश्चिन्नेष्टे अवरत्वान्न तथा त्वम्, किं तु सर्वेषां भूतानां नियामकोऽसि । ईशिताऽपि कश्चित् दुराराध्यत्वान्नाराध्यते । न त्वं तथा । सर्वेषां देवानामप्याराध्यः । किमुतान्येषाम् । देवैः ब्रह्मादिभिः क्रीडनकरूपैः अक्षशाररूपैः वा दीव्यसि क्रीडसि । तान् कर्तुं अकर्तुं अन्यथा कर्तुं च शक्तोऽसि । अतो जानास्येव त्वत्प्रभावम् । आराध्यमानोऽपि कश्चित् न पालयति । अशक्तत्वान्न तथा त्वम् । सर्वस्य जगतः पालनात् पतिरसि । अतो भवान् पुरुषोत्तमः । अतोऽन्याविदितवेदनं तव युज्यते ॥ १५ ॥

कृष्णः—

१ देवादयो मम महिमानं न जानन्ति । अहं जानामि । अस्तु नाम तत् । किं कर्तव्यं मया तव । किमर्थं मामेवं स्तौषि ।

अर्जुनः—

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

अवश्यज्ञातव्यं अन्यैरविदितं यो जानाति तेन तदन्येभ्यो वक्तव्यं हि । वदेद्देवोदारचेतास्तथा । अतस्त्वं वक्तुमर्हसि । यस्मादिदमवश्यंज्ञातव्यं अन्यैरविदितं विदितं च त्वया । अतो वक्तुमर्हसि । किं तद्वक्तव्यं मयेति चेत्, या आत्मविभूतयस्ताः सर्वाः वक्तुमर्हसि । दयया ता ब्रूहि । यद्रूपसन्निधानविशेषेण वस्तुतः स्वजात्युत्तमता तद्रूपं १ विभूतिः । वि विशेषेण भवति अनयेति व्युत्पत्तिः । 'येषां विष्णुस्वरूपाणां सन्निधेरन्यवस्तुषु । विशिष्टत्वं स्वजातेः स्यात् विभूत्याख्यानि तानि तु ।' इत्युक्तं च । याभिः विभूतिभिः त्वं इमान् लोकान् व्याप्य तिष्ठसि । तेजसा यशसा नियमनेन च लोकान् व्याप्य तिष्ठन्ति विभूतयस्ताः । अतस्त्वं ताभिर्विभूतिभिः लोकान् व्याप्य तिष्ठसि । तादृशीः विभूतीः त्वं निरवशेषं कथय । इदमेव प्रार्थ्यते । इदमेव कर्तव्यं त्वया मम ॥ १६ ॥

कृष्णः—

किं मां प्रार्थयसि ? त्वमेव पुनः पुनर्विचिन्त्य विभूतीर्मम जानीहि ।

अर्जुनः—

कथं विद्यामहं योगिन् २ त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥ १७ ॥

१ अत्र 'नाहं न च शिवोऽच्युतः' इति ब्रह्मवचनं 'पश्यन्तीषु श्रुतिषु' इति श्रीस्तुतिपद्यं च अनुसन्धेयम् ।

२ रा । नियाम्यं वस्तु विभूतिः । राजविभूतयो ह्यमात्यादयः । शं उत्तमं विविधम् । रा । योगीति पाठः । अहं योगी भक्तियोगनिष्ठः सन् त्वां चिन्तयितुं प्रवृत्तः । न जानामि चिन्तनप्रकारं च । अतो येषु येषु भावेषु त्वं नियामको मया चिन्त्योऽसि । तांस्तान् प्रकारानुक्त्वा प्रकारेणानेन मां चिन्तय इति ब्रूहि ।

त्वां सदा चिन्तयन्नप्यहं १ कथं जानीयां त्वद्विभूतीः । नित्यैश्वर्यबलवीर्यादिशक्तिर्हि त्वमसि । क ते महीयसी विभूतिः ? क वा अणीयसी मे मतिः । अतः त्वयैव ता वक्तव्याः । अतः केषु पदार्थेषु मया त्वं चिन्त्योऽसि । भगवन्, केषु केषु पदार्थेषु विभूतिरूपेण त्वं तिष्ठसीति चिन्तनीयं मया। तद्वद । केषु केषु त्वं चिन्त्योऽसि । कस्य कस्य नियामकत्वेन सजात्युत्तमतापादकत्वेन २ त्वां सदा चिन्तयन्नहं त्वां साक्षात्कुर्याम् । तेन च त्वां प्राप्नुयाम् । तद्ब्रूहि । मयैव ज्ञातुमशक्यत्वात् त्वां प्रार्थयामि ॥ १७ ॥

कृष्णः—

उक्ता हि मम विभूतयः सप्तमे । 'रसोऽहमप्सु कौन्तेय' इत्यादिना । नवमे च 'अहं क्रतुरहं यज्ञः' इत्यादिना । किं विस्मृतवानासि ?

अर्जुनः—

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

तव सामर्थ्यातिशयं ३ विभूतीश्च कथय । यद्यप्युक्तमेवोभयं त्वया । तथाऽपि पुनः ब्रूहि । दुर्विज्ञेयत्वात् । उक्तस्य पुनर्वचनं किमर्थमर्थ्यते इति चेत्, संग्रहेणोक्तं प्राक् । ४ विस्तरेण ब्रूहि । भूय एव वक्ष्यामि शृणु इति परमया कृपया त्वयैव ह्यभिहितम् । नायं निर्बन्धः । किं तु याचना । न केवलमहं मदीप्सितं त्वां याचे ।

---

१ चिन्तयन् कथं विद्याम ।

२ कथं चिन्तयन् विद्याम् ।

३ 'एतां विभूतिं योगं च मम यो वेत्ति तत्वतः' इति द्वयोरपि ज्ञातव्यत्वोक्त्या योगं विभूतिं च कथयेति द्वयोः कथनप्रार्थना । मध्ये विभूतीर्वक्तुमर्हसीति विभूतिकथनप्रार्थना तु भगवतः सर्वोत्तमवृत्तिनिश्चयाय विभूतीनामवश्यज्ञातव्यत्वाभिप्रायेण ।

४ अर्थाधिक्यं विस्तारः । शब्दाधिक्यं विस्तरः ।

किं तु सर्वैरपि स्वेप्सितलाभाय त्वमेव याच्यसे। भक्तानां भूयो जनिं परिहरसि हि त्वम्। अतः तत्त्वमुपदिश्य मा पुनर्जनिरहितं कुरु। अलमनेनोपदेशेन इति किं तवालम्बुद्धिः नोदेति इति चेत्, त्वद्वचनामृतं शृण्वतो मम अलम्बुद्धिर्नास्ति। यद्यहं शब्दबुद्ध्या शृणुयाम्, तर्ह्यलम्बुद्धिः स्यात्। न तथा, अमृतबुद्ध्या हि श्रोत्रपुटेन पिबामि। अमृतं पिबतः कथमलम्बुद्धिरुदियात्। प्रसिद्धं हीदं। अन्तर्यामी त्वमेव जानासि नास्ति मे तृप्तिरिति। अतो याचे ॥ १८ ॥

सञ्जयः—

पार्थेनैवं पृष्टो भगवान् समीचीनोऽयं प्रश्नप्रकारः। न विस्मृतवान् मदुपदिष्टानर्थान्। अनूदितवांश्च किंचित्। इति परमममन्दमानन्दमवाप्तः, 'पार्थ, नितरां परितोषो मे। सम्यक्पृष्टवानसि। विभूतीस्ते कथयिष्यामि' इत्याह।

भगवानुवाच।

हन्त ते कथयिष्यामि दिव्या[१] ह्यात्मविभूतयः।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

हे कुरुश्रेष्ठ, अर्जुन, ईदृशेन बुद्धिकौशलेन हि त्वं कुरुश्रेष्ठोऽसि। नितरां परितोषो मम। या आत्मविभूतयः दिव्याः ताः ते कथयिष्यामि। न सर्वा दिव्या विभूतयो वक्तुं शक्याः। अतः प्रधानभूताः[२] प्रसिद्धाश्च काश्चिद्वक्ष्यामि। यतो मे विस्तरस्य अन्तो नास्ति। यदि मे विषयो विस्तरेण वक्तुमारभ्येत तर्हि तस्य अवसानं न स्यात्। अतः प्राधान्येन विभूतीः कथयिष्यामि ॥ १९ ॥

---

१ रा। 'विभूतीरात्मनः शुभाः' इति पाठः।
२। हि: प्रसिद्धा हेतौ च।

सञ्जयः—

विभूतीः कथयिष्यामि इति कृतप्रतिज्ञो भगवान्, केषुचन भावेषु विभूतिरूपेण मदवस्थितिश्रवणे तदन्यत्र मम स्थितिर्नास्तीति, केषु केषु च भावेषु चिन्त्योऽसि भगवन् मयेति पृष्टेन मया कांश्चिद्भावानुक्त्वा एषु भावेष्वहं चिन्त्य इत्युक्ते एवमेवाहं चिन्तनीय इति 'देवानामस्मि वासवः', 'रुद्राणां शङ्करश्चास्मि', 'धाताऽहं विश्वतोमुखः' इत्यभेदवचनश्रवणे ब्रह्मरुद्रेन्द्रादिभिरैक्यं भगवत उच्यत इति शङ्कितायमिति तादृशशङ्काऽनुन्मेषाय स्वस्य सर्वत्र स्थितिं अधिकारिभेदेनोपासनाभेदं वक्ष्यमाणसामानाधिकरण्यनिर्देशहेतुं च कथयन् निरतिशयमात्मनो महिमानं आह—

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥

हे गुडाकेश अर्जुन अहं आत्मा सन् अन्तर्यामी सन् सर्वेषां भूतानां चेतनानां अचेतनानां च आशये हृदयदेशे अन्तः प्रदेशे च स्थितः । 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इति श्रुतिः । वक्ष्यते च 'सर्वस्य चाहं हृदि सन्निविष्टः' इति 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' इति 'न तदस्ति विना यत् स्यात् मया भूतं चराचरम्' इति च । १ अहमेवं सर्वत्रावस्थितः । न वक्ष्यमाणेषु केषुचिद्भावेष्वेव । तथाऽपि तेषु स्थित्युक्तिः

१ म ।

तेषां स्वजात्युत्तमता मत्सन्निधानविशेषेण । अतोऽहं सर्वोत्तम इति निश्चयजननाय । १ उत्तमाधिकारिणां सर्वेषां अहं आत्मा अन्तर्यामीत्युपासनीयः । २ सर्वेषां भूतानां हृदयदेशे स्थितः प्रत्यगात्मैव अहं इति सर्वजीवाभेदेनोपासनीयः । ३ सर्वभूताशयास्थितः आत्मा प्रत्यगात्मा अहमेव स एवाहं इत्यात्मनः सर्वात्मत्वानुसन्धानेनोपासनीयः । ४ सर्वभूताशयस्थितः परमात्मा प्रत्यगात्मा अहमेव स एवाहमिति स्वस्य ब्रह्माभेदभावनया ब्रह्मणः स्वाभेदभावनया चोपासनीयः । ५मन्दानां मध्यमानां च वक्ष्यमाणेषु भावेषूपासनीयः । वक्ष्यते च 'अथ वा बहुनैतेन किं ज्ञातेन तवार्जुन' इति । ६ अहं सर्वभूतानामात्मत्वेन हृदयदेशे स्थितः । सर्वाणि च भूतानि मम शरीरभूतानि । शरीरवाचकशब्देन शरीरिणोऽभिधानं सामानाधिकरण्यं च चैत्रोऽयं मैत्रोऽयमित्यादौ प्रसिद्धम् । एवं 'देवानामस्मि वासवः' इत्यादिषु देवानामुत्तमो यो वासवः सोऽपि मम शरीरं तच्छरीरकोऽहं इति वा सप्तसु प्रथमा इति व्याकरणान्तरात् सप्तम्यर्थे अतः प्रथमा । वासवे अहं इति वा अर्थः । अतो नाभेदोक्तिः । न केवलमहमन्तर्याम्येव अपि तु आशेरतेऽस्मिन्नित्याशयः । ७ आधारः सकलजगदाधारभूततया स्थितोऽपि । उक्तं च मया 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मत्स्थानि सर्वभूतानि' इति 'स्थानं निधान'मिति च । न केवलमहमात्मा । आधारश्च । किन्तु अहमेव चेतनानामचेतनानां च सर्वेषां भूतानां आदिः मध्यं अन्तश्च । संहर्ता सृष्टिस्थितिसंहारकर्ता । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इत्युक्तेः उत्पत्त्यादीनां मदधीनत्वेन आद्यादिशब्दवाच्योऽहम् । ईदृशत्वान्मम उक्तं वक्ष्यमाणं च सर्वोत्तमत्वं युज्यते । सप्तमे 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मयि सर्वमिदं प्रोतं' इति नवमे 'प्रभवः प्रलयस्थानं निधानं' इति च आदिमध्यान्तकर्तृत्वोक्तावपि पुनरत्र तदुक्तिः ईदृशमहामहिमवत्त्वान्ममैवं ध्येयतेति वक्तुम् ॥ २० ॥

* एतत्संख्यानुरोधेन इतःपरं पुटचतुष्टयाभावे ग्रन्थत्रुटिर्नास्तीति ज्ञेयम् ।

१ शं २, ३ शं । ४, ५, शं । ६ रा । ७ सर्वभूताशयः स्थितः इति पदद्वयम् ।

**अर्जुनः । हन्त ! विभूतीः कथयिष्यामीति महानयमनुग्रहः । कथय भूतीस्ते परममया कृपया ॥**

॥ कृष्णः ॥ आदित्यानामहं विष्णुः ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

१ आदित्यानां द्वादशानां विष्णुनामा य आदित्यः सोऽहम् । तस्य स्वजात्युत्तमत्वप्रदोऽहम् । तस्मिन्नहं चिन्तनीयः । एवमग्रेऽपि । आदित्यानां अदितिपुत्राणां देवानां २ द्वादशानामादित्यानां वा मध्ये विष्णुः वामनत्वेनावतीर्णः यः सोऽहम् । तेषूत्तमोऽहम् । तेन रूपेण चिन्तनीय इति वा । चन्द्रसूर्यनक्षत्रादीनां तेजसां मध्ये रविः सूर्योऽहम् । तस्य सजातीयोत्तमत्वं केनेति चेत् अंशुमत्त्वेन । निरतिशयप्रकाशसदाद्योतमानसहस्रकिरणः खलु सः । मरुतां वायूनां । ते च ३ इन्द्रहननार्थं दितेरुदरजातस्य गर्भस्य, ज्ञात्वा तदन्तरमन्तः प्रविश्य वज्रिणा वज्रेण सप्तधा निर्भिन्नस्य पुनः प्रत्येकं सप्तधा भेदनेन जाताः आवहविवहप्रवहपरावहोद्वहसंवहपरिवहनामकगणसप्तकतां प्राप्ताः एकोनपञ्चाशत् मरुतो नाम देवाः तेषां मध्ये मरीचिनामा उत्तमो मरुत् सोऽहमस्मि । ४ सोऽस्मि सोऽहमिति वा । नक्षत्राणां पतिः यः चन्द्रः सोऽहम् । तस्य तादृशत्वप्रदोऽहम् । पार्थ अत्रेदमवधेहि । विभूतयो द्विविधाः । प्रत्यक्षा अप्रत्यक्षाश्चेति । तत्र वामनकपिलरामकृष्णव्यासरूपाणि प्रत्यक्षाविभूतयः । अन्यानि तेषु तेषु भावेषूक्तानि रूपाणि अप्रत्यक्षाविभूतयः । पुनर्द्विविधाः । उत्तमा उत्तमत्वप्रदाश्चेति । तत्र प्रत्यक्षा उत्तमाः । तिरोहिता उत्तमत्वप्रदाः । उत्तमत्वप्रदा द्विविधाः । विजातीयसजातीयोत्तमत्वप्रदत्वभेदात् । नक्षत्राणामहं शशी । वरुणो यादसामहम् । इत्यादयो विजातीयोत्तमत्वप्रदा विभूतयः । अन्यास्तु सजातीयोत्तमत्वप्रदाः । अत्र प्रकरणे षष्ठी द्विविधा । निर्धारणषष्ठी सम्बन्धषष्ठीति । आदित्यानामहं विष्णुरित्यादिषु निर्धारणषष्ठी । भूतानामस्मि चेतनेत्यादिषु सम्बन्धषष्ठी । नक्षत्राणामहं शशीत्यत्रापि सम्बन्धषष्ठ्येव । चन्द्रस्य विजातीयत्वेन नक्षत्रेभ्यो निर्धारणायोगात् । षष्ठ्यर्थः सम्बन्धः ।

---

१ । शं । रा । २ म । शं । ३ । इयं कथा भागवते षष्ठस्कन्धे १८ अध्याये विस्तरेण कथिता । ४ अस्मीत्यव्ययम् ।

भूतानामस्मि चेतनेत्यादिषु आश्रयाश्रयिभावः। नक्षत्राणामहं शशीत्यादिषु स्वस्वामिभावः। ताराधिपतिर्हि चन्द्रः। आश्रयाश्रयिभावसंबन्धषष्ठीस्थलेषु भूतानामस्मि चेतना, तेजस्तेजस्विनामहम्, नीतिरस्मि जिगीषतामित्यादिषु चेतनाश्रितेषु धर्मेषु उत्कर्षाधायकत्वेन य उत्तमो धर्मः चेतनारूपः तेजोरूपः नीतिरूपश्च सोऽहम्। तस्य धर्मस्य स्वाश्रयोत्तमत्वप्रदत्वरूपं यदुत्तमत्वं तत्प्रदोऽहमित्यादिरीत्या अर्थः ॥ २१ ॥

॥ कृष्णः ॥ वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥

ऋग्वेदादीनां चतुर्णां वेदानां मध्ये गानमाधुर्येणातिरमणीयतया सहस्रशाखतया चोत्तमो यः सामवेदः सोऽहम्। तस्योत्तमत्वप्रदोऽहम्। देवानां मध्ये उत्तमो य इन्द्रः सोऽहम्। श्रोत्रत्वक्नेत्ररसनघ्राणाख्यानि पञ्चज्ञानेन्द्रियाणि। वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि। मनश्चैकम्। वक्ष्यते च 'इन्द्रियाणि दशैकं च' इति। 'श्रोत्रं चक्षुस्स्पर्शनं च रसनं घ्राणमेव च। अधिष्ठाय मनश्चाय' मिति च ॥

एवमेकादशानामिन्द्रियाणां मध्ये उत्तमं यत् मनः तदहम्। मत्सन्निधानान्मनसः उत्तमत्वम्। १ 'मनसो वशे सर्वमिदं बभूव। नान्यस्य मनो वशमन्वियाय' इति श्रुतिः। भूतानां सम्बन्धिनी या तदाश्रितधर्मेषूत्तमा चेतना बुद्धिः साऽहम्। यद्यपि बुद्धिर्बुद्धिमतामस्मीति सप्तमे बुद्धिरहमित्युक्तम्। तथाऽपि तत्र न केवलमहं जगत उत्पत्तिस्थितिलयकर्ता ; किं तु उत्कर्षाधायकोऽपि। यस्य येनोत्कर्षः तस्मिन् तेन रूपेण वर्ते। उत्कर्षाधायको यो धर्मः तस्याहं नियामकः। बुद्धिमतामुत्कर्षो बुद्ध्या तस्या नियामकोऽहम् इत्याशयेन बुद्धिनियामकत्वमुक्तम्। अत्र बुद्धेः स्वाश्रयाश्रितधर्मेषूत्तमत्वप्रदोऽहमिति बुद्धेरुत्तमत्वप्रदत्वमात्मन उक्तमिति भेदः। बहुस्मरणशक्तिर्वा चेतना। 'बहुस्मरणशक्तिश्च चेतनेत्यभिधीयते' इत्युक्तेः ॥ २२ ॥

---

१. अत्र वाक्च मनश्चार्तीयेतामित्यादिश्रुत्युक्ता कथा अनुसन्धेया।

॥ कृष्णः ॥ रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥

एकादशानां रुद्राणां उत्तमः यः शङ्करः पार्वतीपतिः कैलासवासी सोऽहम्। तस्योत्तमत्वप्रदोऽहम् । यक्षाणां रक्षसां च मध्ये य उत्तमः कुबेरः सोऽहम्। कुबेरस्य यक्षत्वाद्यक्षाणां मध्ये उत्तम इति वक्तुं युक्तम् । राक्षसत्वाभावात् रक्षसां मध्ये उत्तम इति कथमिति चेत् यक्षराक्षसजात्योः क्रूरत्वादिना एकजातित्वाभिप्रायेण यक्षोत्तमस्य राक्षसोत्तमत्ववचनं युक्तम् । यद्वा नेयं षष्ठीनिर्धारणे । अपि तु सम्बन्धे । सम्बन्धश्च स्वामिभृत्यभावः । १ कुबेरो यक्षाणां राक्षसानां गुह्यकगन्धर्वकिन्नरकिंपुरुषसिद्धसाध्यविद्याधरचारणाख्यदेवयोनिविशेषाणां च पतिः; तस्य तादृशत्वप्रदोऽहम् । सजातीयविजातीयोत्तमत्वप्रदेयं विभूतिः । विजातीयोत्तमत्वप्रदैव वा । अष्टानां वसूनां मध्ये य उत्तमः पावकः अग्निः तद्रूपो वसुः सोऽहम् । अष्टसु वसुषु अग्निरेको वसुः । शिखरवतां पर्वतानां मध्ये य उत्तमो मेरुः सोऽहम् ॥ २३ ॥

॥ कृष्णः ॥ पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥

हे पार्थ पुरोहितानां मध्ये सर्वदेवराजस्य इन्द्रस्य पुरोहितत्वादुत्तमो बृहस्पतिः सोऽहम् । तं मां जानीहि । तस्य उत्तमत्वप्रदोऽहमिति जानीहि । सेनापतीनां मध्ये देवसेनापतित्वेनोत्तमः यः सुब्रह्मण्यः सोऽहम् । प्रवाहव्यतिरिक्तस्थास्नुजलाशयाः सरांसि तेषां मध्ये य उत्तमः समुद्रः सोऽहम् । स्थिरजलाशयो हि समुद्रः । न हि स नदीव प्रवहति ॥ २४ ॥

॥ कृष्णः ॥ महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥

१. अत एव यक्षराट् गुह्यकेश्वरः पुण्यजनेश्वरः इत्यमरः ।

महर्षीणां ब्रह्मर्षीणां मध्ये य उत्तमो भृगुः सोऽहम् । १ काश्यां मखमाचरद्भिः, त्रिषु देवेषु उत्तमो यः तस्मै मखार्पणं कुरुत इति नारदेनोक्तैः त्रिषु देवेषु अन्यतमस्य तस्य उत्तमत्ववेदनाय प्रेरितो भृगुः कैलासं सप्तलोकञ्च गत्वा रुद्रब्रह्मणोरनुत्तमत्वं मत्वा वैकुण्ठमाप्य तत्र शेषपर्यङ्के सह लक्ष्म्या शयानं विष्णुं वक्षसि पादेन ताडयित्वा तादृशेनाप्यपराधेन कोपमप्राप्य तेन नितरामुपचारितः समुपेत्य विष्णुमुत्तममाह । श्रुत्वा च तद्वचनं महर्षयो विष्णवे मखार्पणं चक्रुः । तादृशस्य भृगोर्महर्षेः तादृशत्वप्रदोऽहम् । अर्थाभिधायिनः पदात्मकाः शब्दा गिरः तासां मध्ये य उत्तमं एकमक्षरं प्रणवः । ओमित्येकाक्षरं ब्रह्मेति श्रुतिः । तदहं, तस्यार्थतः शब्दतश्चोत्तमत्वप्रदोऽहम् । प्रणवो हि अर्थतः शब्दतश्चोत्तमः । अत एव वेदानामुत्कर्षाधायकः । उक्तं च मया प्रणवः सर्ववेदेष्विति । यद्यपि सप्तमे प्रणवस्सर्ववेदेष्वित्यत्र नवमे वेद्यं पवित्रमोङ्कार इत्यत्र प्रणवोऽहमित्युक्तम् । तथाऽपि सप्तमे प्रणवरूपेण वेदानामुत्कर्षाधायकोऽहं इत्यभिप्रायेण, नवमे च तत्तद्वस्तुस्वरूपसत्तानियामकत्वेन तत्तच्छब्दवाच्योऽहमित्यभिप्रायेण प्रणवोऽहमित्युक्तम् । अत्र तु मत्संनिधानात् प्रणवस्यार्थाभिधायिपदात्मकशब्दोत्तमत्वं तस्मिन्नहं तेन रूपेण चिन्त्य इत्यभिप्रायेण प्रणवोऽहमित्युक्तमिति भेदः । यज्ञानां भगवदाराधनात्मकानां मध्ये य उत्तमः अर्थज्ञानपूर्वकभगवन्मन्त्र २ जपात्मको यज्ञः भगवदाराधनरूपः सोऽहम् । हिंसादिदोषराहित्यात् चित्तशुध्युत्पादनेन ध्यानद्वारा ज्ञानयोगजनकत्वाच्च तस्योत्तमत्वं, तस्य तत्प्रदोऽहम् । शिखरहीनानां पर्वतानां मध्ये य उत्तमो हिमवान् सोऽहम् । तस्योत्तमत्वप्रदोऽहम् ॥ २५ ॥

कृष्णः ॥ अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥

सर्वेषां वृक्षाणां मध्ये य उत्तमोऽश्वत्थः सोऽहं । मत्सान्निधानादेव तस्योत्तमत्वम् । न तु रूपतः पर्णतः पुष्पतः फलतश्च । पूज्यो हि स सर्वेषु वृक्षेषु । न हि तस्येवान्यस्य प्रदक्षिणादिकमाचरन्ति । देवा एव सन्तो मन्त्रदर्शनादृषयो देवर्षयः । तेषां मध्ये य उत्तमो नारदः सोऽहम् । तस्योत्तमत्वप्रदोऽहम् । देवगायका

---

१. कथेयं श्रीभागवते १० स्कन्धे, भविष्योत्तरपुराणादिषु च द्रष्टव्या।
२ उपांशूच्चारणम् ।

गन्धर्वाः तेषां मध्ये य उत्तमः चित्ररथाख्यः सोऽहम् । योगप्रभावसिद्धाणिमाद्यैश्वर्यवन्तः सिद्धाः तेषां मध्ये य उत्तमः तपस्वी मननशीलः कपिलः सोऽहम् । तद्रूपं सजातीयोत्तमं, तेन रूपेण चिन्त्योऽहम् । कपिलोऽहमित्येव पूर्तौ मुनिरिति कपिलविशेषणम् तस्य मुनित्वेन प्रसिद्धिद्योतनाय । एवं बृहत्साम उशना कविरित्यत्रापि बोध्यम् ॥ २६ ॥

कृष्णः—उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

अश्वानां मध्ये य उत्तमः उच्चैःश्रवा नाम शचीपतेरश्वः । स हि १ अमृतशब्दितक्षीरोद्भूतः । क्षीरसमुद्रे जातः ।२ अमृतशब्दितसुधार्थं कृतं क्षीरसमुद्रमथने उद्भूतः । ३अमृतशब्दितसुधया सह उद्भूतः तादृशस्य तस्य उत्तमत्वप्रदोऽहं । तमश्वं मां जानीहि । गजानामुत्तमाः दिग्गजाः तेषां गजोत्तमानां मध्ये ४ अमृतोद्भवो यो गजेन्द्रः उत्तमः ऐरावतो नामा सोऽहम् । तं मां विद्धि । नराणां मध्ये य उत्तमो राजा तं मां विद्धि । राज्ञो मनुष्यत्वेऽपि मत्सन्निधानान्मनुष्येषूत्तमता ॥ २७ ॥

कृष्णः— आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

चक्रादिभगवदायुधव्यतिरिक्तार्वाचीनायुधानां मध्ये यदुत्तमं वज्राख्यमिन्द्रस्यायुधं तदहम् । ५ वृत्रासुरवधार्थमिन्द्रो दधीचिमृषिप्रवरं याचित्वा तद्दत्तेन तदस्थ्ना वज्राख्यं महदायुधं कारयित्वा तेन तं वृत्रं हत्वा महेन्द्रतामाप । ६ 'इन्द्रो वृत्रमहन् तं देवा अब्रुवन् महान् वा अयममूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्व'मिति श्रुतिः । तस्यायुधस्य तादृशत्वप्रदोऽहम् । धेनूनां मध्ये या उत्तमा कामधेनुः साऽहम् । तत्तन्निमित्तभेदात् सुखानि नानाविधानि तेषु

१ अमृते क्षीरे उद्भवो यस्य तम् । २ अमृते लक्षणया तदर्थे मथने उद्भवो यस्य तम् । ३ अमृतेन सुधया सह उद्भवो यस्य तम् । ४ अमृतोद्भवमित्यस्य काकाक्षिन्यायादुभयत्र सम्बन्धः । ५ कथेयं भागवते ६ स्कन्धे अध्याये अवलोकनीया । ६ कृष्णयजुःसंहितायां ६. ५. ५. २ ।

सर्वेषु सुखेषु १ मन्मथनिमित्तकं सुरतसुखमुत्तमं । न हि तस्य सुखस्य सदृशं विषयसुखमन्यत् । तदहम् । सुरतं द्विविधं सुखानुभवमात्रपर्यवसायि प्रजोत्पादनपर्यवसायीति । उभयस्मादपि सुखमुत्पद्यते । उभयजन्यसुखोत्तमत्वप्रदोऽहम् । तथाऽपि मत्प्रसादार्थं मदुपासकैः प्रजोत्पादनपर्यवसायिसुखोत्तमत्वप्रदत्वेन चिन्तनीयोऽहम् । उक्ता चेयं रीतिर्मया पुण्यो गन्धः पृथिव्यां चेत्यादिकथनावसरे । सर्पाणामेकशिरसां मध्ये य उत्तमो वासुकिः सोऽहम् ॥ २८ ॥

कृष्णः—अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितृणामर्यमा चास्मि यमः संयमतामहम् ॥ २९

नागानामनेकशिरसां मध्ये य उत्तमः शेषः सोऽहम् । यादांसि जलजन्तवः झषनक्रकूर्मादयः तेषां पतिर्यो वरुणः सोऽहम् । षष्ठीयं सम्बन्धे । पितृणां मध्ये य उत्तमः पितृराडर्यमा नाम सोऽहम् । विचार्य पुण्यपापानि शिक्षां विदधतां मध्ये य उत्तमो यमः सोऽहम् ॥ २९ ॥

कृष्णः—प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

दैत्यानां मध्ये य उत्तमः प्रह्लादः सोऽहम् । लोके दण्डनाधिकृतव्यतिरिक्ता अधिकृता गणयन्तो दिवसान् वधबन्धनादिना वशीकृत्य गणयित्वा पूर्वकृतापराधान् दण्ड्यं दण्डनाधिकारिसविधं प्रापयन्ति । तद्वत् पापिनां यमसविधप्रापणाधिकृताः केचित् तेषां मध्ये य उत्तमः कालनामा २ सोऽहम् । ३ गणनं कुर्वतां गणनादेरुपयुक्तः यः कालः दिवसपक्षमासर्त्वयनसंवत्सराद्यात्मकः सोऽहम् । अस्मिन्नर्थे सम्बन्धषष्ठीयम् । मृगाणां मध्ये य उत्तमः सिंहः सोऽहम् । पक्षिणां मध्ये य उत्तमो विनतानन्दनो गरुडः सोऽहम् ॥ ३० ॥

कृष्णः—पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

---

१ कन्दर्पो मन्मथः लक्षणया तन्निमित्तकसुखं गृह्यते । अत्र निर्धार्यमाणरतिसुखस्य निर्धारणावधिरूह्यः । २ म । रा । शम् । ३ शं ।

शोधकानां वेगवतां च मध्ये यः उत्तमो वायुः सोऽहम् । न हि वायुव्यतिरिक्तं तथा शोधकमन्यत् । वायुना हि पन्थाः शोध्यते । अन्यथा अनेकाशुचिवस्तुसम्बन्धदूषिते पथि कथमाचारशीलाः पदं न्यस्य सञ्चरेयुः । शस्त्रधारिणां शूराणां मध्ये १ श्रीरामो दाशरथिरहम् । तद्रूपं सजातीयोत्तमम् तेन, रूपेण चिन्तनीयोऽहम् । मत्स्यानां मध्ये य उत्तमो मकरो नाम मत्स्यजातिविशेषः सोऽहम् । प्रवहन्ति जलानि स्रोतांसि तेषां मध्ये या उत्तमा गङ्गा साऽहम् । सा हि सर्वासां प्रवरा नदीनाम् ॥ ३१ ॥

कृष्णः—सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

हे अर्जुन सृज्यमानानां पदार्थानां उत्पत्तिस्थितिलयकर्ता अहमेव । न केवलमिदानीमुच्यमानानां केषांचिद्भावानां नियामकोऽहम् । अपि त्वस्यां ब्रह्मसृष्टौ सृज्यमानानां सर्वेषामप्युत्पत्तिस्थितिलयकर्तृत्वेन तन्नियामकत्वेन च नियामकोऽहम् । इदं त्वमवधारय । एतदर्थमेव २ अहमादिश्च मध्यं च भूतानामन्त एव चेति पूर्वमुक्तस्य पुनरत्रोक्तिः । न केवलं ३ भूतशब्दोक्तचेतनानामहमादिर्मध्यमन्तश्च । अपि तु सृज्यमानानां सर्वेषां चेतनानामचेतनानां च । पूर्वोक्तं चेतनविषयम् । इदं तु सर्वविषयम् । त्वमेवं जानीहि । ४ तत्र तत्र सृज्यमानानां स्रष्टारः रक्ष्यमाणानां पालयितारः संह्रियमाणानां संहर्तारश्च दृश्यन्ते । तेप्यऽहम् । ते मम विभूतयः । यथा रविप्रभृतयः । अत एव तत्र तत्र मम सर्वस्रष्टृत्वादिवचनं युज्यते । आदिः उत्पत्तिकर्ता यः सोऽहम् । मध्यं स्थितिकर्ता यः सोऽहम् ।

१ रा भाष्यम् । अत्र शस्त्रभृत्त्वं विभूतिः अर्थान्तरा-भावात् । आदित्यादयश्च क्षेत्रज्ञाः । आत्मत्वेनावस्थितस्य भगवतः शरीरतया धर्मभूता इति शस्त्रभृत्त्वस्थानीया इति । शरीरितया धर्मी भगवान् ।यमान्तद्वितीयान्तपदोक्ताः रविबृहस्पतिप्रभृतयो भावाः तं प्रति शरीरतया धर्मभूताः । ते च धर्मभूता भावा विभूतयः । अत्र प्रथमान्तपदोक्तस्य साक्षाद्भगवत्त्वेन धर्मभूतपदार्थान्तरत्वाभावात् विभूतित्वं न सम्भवति । अतः शस्त्रभृत्त्वरूपधर्मस्य विभूतित्वम् । रविप्रभृतयो विभूतयः धर्मतया धर्मिणो भगवतो महोत्कर्षसूचकाः । अत्र रामस्य धर्मभूतं शस्त्रभृत्त्वं निरतिशयं महोत्कर्षसूचकमिति भावः ।
२ म । ३ शं । ४ रा ।

अन्तः स्थितिकर्ता यः सोऽहम् । अतो न पुनरुक्तिशङ्कावकाशः । षष्ठीयं संबन्धे । न निर्धारणे । विद्याः बह्वयः तासां मध्ये या १ आत्मानमधिकृत्य प्रवृत्ता सर्वाधिकस्य परमात्मनो विद्या वेदान्तविद्या साऽहम् । सा ह्युत्तमा । अथ परा यया तदक्षरमधिगम्यत इति श्रुतिः । वादो जल्पः वितण्डा इति तिस्रः कथाः कलहपर्यन्तसायि भाषणं वितण्डा । वृथा भाषणं जल्पः । तत्त्वनिर्णयार्थं भाषणं वादः । तास्तिस्रः कथाः कुर्वतां मध्ये वादरूपकथां कुर्वन्त उत्तमास्तेषां सम्बन्धी यो वाद उत्तमः सोऽहम् । तस्य स्वाश्रयस्य वादरूपकथां कुर्वतः कथकेषूत्तमत्वप्रदत्वरूपं यदुत्तमत्वं तत्प्रदोऽहम् । सम्बन्धषष्ठीयम् । प्रवदतां मध्ये वादकथां २ कुर्वन् उत्तमस्सोऽहम् । एवमर्थाभ्युपगमे निर्धारणषष्ठी ॥ ३२ ॥

कृष्णः:—अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥

अकारादिक्षकारान्तानां वर्णानां मध्ये य उत्तमः अकारः सोऽहम् । अकारो हि सर्वेभ्यो वर्णेभ्य उत्तमः । अकारो वै सर्वा वागिति श्रुतिः । अत एव हि वर्णसमाम्नाये तस्य प्रथमं पाठः । स हि परब्रह्मणो वाचकः । अ इति ब्रह्मेति श्रुतेः । अत एव ककारादिषु व्यञ्जनेषु उच्चारणार्थमयमेव योज्यते । ककारो गकार इति । भगवतः सर्वव्याप्तिरूपो यो महानुत्कर्षः तद्वाचकत्वादुत्तमोऽयम् । आप्नोतीत्यः इति व्युत्पत्तिः । तस्याकारस्य तादृशत्वप्रदोऽहम् । ३ समासानां मध्ये य उत्तमो द्वन्द्वसमासः सोऽहम् । पितापुत्रौ गुरुशिष्यौ रामलक्ष्मणौ इत्यादयो द्वन्द्वसमासाः । द्वयोः पदयोस्त्रयाणां वा पदानां अनेकेषां पदानां वा एकीकरणं समासः । राज्ञः पुरुष इति विग्रहे द्वयोरेकीकरणे तत्पुरुषसमासः । श्यामं सुन्दरं अङ्गं यस्य सः श्यामसुन्दराङ्गः इति बहुव्रीहिसमासः । रामश्च लक्ष्मणश्च रामलक्ष्मणौ । रामश्च लक्ष्मणश्च भरतश्च शत्रुघ्नश्च रामलक्ष्मणभरतशत्रुघ्नाः इति द्वन्द्वसमासः । कुम्भस्य समीपमिति विग्रहे उपकुम्भमित्यव्ययीभावसमासः ।

१ आत्मानमधिकृत्य प्रवृत्ता विद्या; अधि सर्वाधिकः स चासावात्मा च अध्यात्मा परमात्मा तस्य विद्या वा अध्यात्मविद्या । २ वादः अस्यास्तीति वादः वादं कुर्वन् । अर्श आदित्वादच् ।

३। समासानां समूहः सामासिकं तस्य मध्ये ।

अव्ययीभावे पूर्वपदार्थस्य प्राधान्यम् । तत्पुरुषे उत्तरपदार्थस्य प्राधान्यम् । ब
व्रीहौ यस्येत्युक्तस्यान्यपदार्थस्य प्राधान्यम् । द्वन्द्वे तु समासघटकसर्वपदार्थप्रा
न्यमिति द्वन्द्व उत्तमः ; तस्य उत्तमत्वप्रदोऽहम् । कालो द्विविधः । अंशः अंशीचे
कलाकाष्ठामुहूर्तादिः युगमहायुगमन्वन्तरान्तः विनाशी कालांशः कालः ब
लावयवात्मकः । उत्तरावधिशून्यः अविनाशी महाकालांशी कालः । तयो
उत्तमो यो अक्षयः कालः महाकालोऽविनाशी अहमेव सः । तन्नियामकोऽहमेव
अंशकालनियामकत्वं तु १ कैमुत्येन सिद्धम् । अत्र कालानामिति निर्धारणाव
रूढ़ः । २ कालनियामकानां मध्ये उत्तमो महाकालनियामकः परमेश्वरो यः
ऽहम् । ३ विश्वतः सर्वतश्चतसृषु दिक्षु मुखानि यस्य सः स्रष्टा ब्रह्मा देवाना
न्द्रादीनां मध्ये उत्तमः सोहम् । अत्र देवानामिति निर्धारणावधेरूढ़ः । ४ सर्वे
कर्मफलविधाता सर्वतोमुखः परमेश्वरः कर्मफलविधातृणां मध्ये उत्तमः सोऽ
तद्रूपोऽहम् । अत्र कर्मफलविधातृणामिति निर्धारणावधिरूढ़ः ॥ ३३ ॥

कृष्णः—मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥

५ संहारकारिणां रुद्रयमादीनां मध्ये सर्वसंहारकत्वेन उत्तमो मृत्युरहम् ।
संहारकारिणामिति निर्धारणावधिरूढ़ः । ६ उत्पत्स्यमानानामपि य उद्भव उ
त्तिस्तत्कर्ताऽहम् । न केवलमिदानीं विद्यमानानां उत्पत्त्यादिकर्ताऽहम् । वि
७ उत्पत्स्यमानानामपि । ८ स्त्रीणां मध्ये कीर्त्याद्यभिमानिन्यः तत्तच्छब्दवाच
सप्तास्त्रियो देवतारूपा उत्तमाः ता अहम् । तासामुत्तमत्वप्रदोऽहम् । उत्तमा
कीर्त्यादयो गुणाः । तेषामन्यतमस्य संबन्धेन पुमांसः स्त्रियश्च श्लाघनीया भ
न्ति । ९ कीर्त्यादयः सप्त धर्मप्रजापतेः पत्न्यः ता नारीणां मध्ये उत्तमाः ता

१ म । रा । शं । २ कालः कलयतामित्यत्र क्षयी काल उक्तः । ३ म । रा । ४
५ शं । अत्र भाष्यम् ; मृत्युर्द्विविधः धनादिहरः प्राणहरश्चेति । उभयहरो मृ
रहमित्यर्थः । ६ म । रा । ७ भविष्यतां भाविकल्याणानां उद्भव अभ्युदय
भवो भवनं कल्याणप्राप्तिः भविष्यन्तः भाविकल्याणाः तेषां उत् उत्कर्षः मा
भवः कल्याणप्राप्तिः सोऽहम् । ८ म । ९ शं ॥

मुत्तमत्वप्रदोऽहम्। १ कीर्त्यादयो भगवतः शक्तिभूतास्सप्त स्त्रियः ता नारीणां मध्ये उत्तमाः तासामुत्तमत्वप्रदोऽहम् ॥ ३४ ॥

कृष्णः—बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहं ऋतूनां कुसुमाकरः ॥ ३५ ॥

ऋगक्षरारूढानां गीतिविशेषाणां सामशब्दितानां मध्ये 'त्वामिद्धि हवामह' इत्यस्यामृचि गीतिर्बृहत्साम तच्च रथन्तरबृहद्वैरूपवैराजशाक्वररैवतादिसामसु उत्तममतिरात्रे इन्द्रस्तुतिरूपं स्तोत्रं तस्योत्तमत्वप्रदोऽहम् । छन्दसां वेदानां तद्गतछन्दोविशिष्टानां मन्त्राणां मध्ये गायत्रीमन्त्र उत्तमः । द्विजत्वापादकत्वात् । 'जन्मना जायते शूद्रः कर्मणा जायते द्विजः' इत्युक्तेः। न हि मन्त्रान्तरोपदेशात् द्विजत्वमश्नुते । यागे प्रधाने सोमाहरणरूपे कार्ये विनियोगाच्च तस्य उत्तमत्वं उत्तमत्वप्रदोऽहम । उक्तात्युक्तादीनां छन्दःशास्त्रोक्तानां षड्विंशतेश्छन्दसां मध्ये गायत्रीमन्त्रपादाक्षरनियामकत्वेन षष्ठं गायत्री छन्दः तदहम् । तदुत्तमत्वप्रदोऽहम् । चैत्रादिमासानां द्वादशानां मध्ये मृगशीर्षनक्षत्रयुक्तपौर्णमासीयुतत्वेन मार्गशीर्षनामा य २ उत्तमो मासः सोऽहम् । अतिशीतातपशून्यत्वेन केशवमूर्तिमासत्वेन वर्षगर्भाधानकालत्वेन पक्वसस्याढ्यत्वेन देवानामुत्तरायणरूपस्याह्नः अव्यवहितपूर्वत्वात् बुद्धिप्रसादहेतुभूतोषःकालत्वेन च तस्योत्तमत्वं तस्य तादृशत्वप्रदोऽहम् । वसन्तादीनां षण्णामृतूनां य उत्तमो वसन्तः सोऽहम् । पुष्पसंपत् ३ समृद्धिमावेन ब्राह्मणाना ४ मग्न्याधानकालत्वेन च वसन्त उत्तमः तस्योत्तमत्वप्रदोऽहम् ॥ ३५ ॥

कृष्णः—द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्वं सत्ववतामहम् ॥ ३६ ॥

। १ रा । सप्तस्वासु श्रियः सर्वोत्तमत्वेऽपि कीर्तिःश्रीरिति निर्देशो न दोषाय । अर्थक्रमेण पाठक्रमस्य बाधसंभवात् । २ अत्र 'मार्गालि तिगळु मदि' इति बाधाऽनुसन्धेया । ३ अत्र चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः इत्यादिकमनुसन्धेयम् । ४ अत्र वसन्ते ब्रह्मणोऽग्निमादधीत वसन्तो वै ब्राह्मणस्यर्तुः । स्वएवैनमृतावधाय । ब्रह्मवर्चसी भवति । मुखं वा एतदृतूनाम् । यद्वसन्तः । यो वसंताऽग्निमाधत्ते । मुख्य एव भवति । इति श्रुतिरनुसंधेया ।

उत्कर्षो द्वेधा गुणतो दोषतश्च। अत एव 'येन केन प्रकारेण प्रसिद्धः पुरुषा भवे' ति व्यवहरन्ति। तत्र गुणत उत्कर्षो यथा मदायत्तः तथा दोषत उत्कर्षोऽपि मदायत्तः। अतो वञ्चनं कुर्वतां संबन्धिसर्वस्वापहारानुकूलं यदक्षदेवनं तदहम्। तस्य स्वाश्रयोत्तमत्वप्रदरूपं यदुत्तमत्वं तत्प्रदोऽहम्। एवमग्रेऽपि। छलयतामिति संबन्धषष्ठी। १ छलनं कुर्वतां वञ्चनानुकूलानि यानि क्रयविक्रयऋणदायविभजनसङ्करादीनि तेषां मध्ये द्यूतमुत्तमं सद्यः सर्वस्वापहारानुकूलं द्यूतेन हृतसर्वस्वो भवानेव तत्र प्रमाणं तदहम्। छलयतां संबन्धीनि इति संबन्धषष्ठीयम्। तानि यानि तेषां मध्य इति निर्धारणषष्ठी ऊह्या। तेजस्विनां यत्तेजः पराभिभवसामर्थ्यरूपं तदहम्। सप्तमे तेजस्तेजस्विनामहमित्यत्र तेजोरूपेण तेजस्विनामुत्कर्षाधायकोऽहमित्युक्तम्। अत्र तु तस्य तेजसः स्वाश्रयोत्तमत्वप्रदत्वरूपं यदुत्तमत्वं तत्प्रदोऽहं इत्युक्तमिति भेदः। जेतॄणां संबन्धी यो जयः सोऽहम्। व्यवसायिनां यो निश्चयज्ञानरूपो व्यवसायः सोऽहम्। उभयत्र संबन्धषष्ठ्यन्तमूह्यम्। सत्त्वगुणकार्यज्ञानभक्तिवैराग्यादिमतां संबन्धि यत्सत्त्वं सत्त्वगुणः सोऽहम्॥ ३६॥

कृष्णः—वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः।
मुनीनामप्यहं व्यासः कवीनामुशना कविः॥ ३७॥

वृष्णयः यदवः तेषां मध्ये वसुदेव २ सुतत्वेनावतीर्णो यो भगवान् सोऽहम्। तेन रूपेण चिन्त्योऽहम्। पाण्डुसुतानां पञ्चानां मध्ये धनञ्जयादिशब्दोदितमहामहिमवान् यस्त्वं सोऽहम्। तव तादृशत्वप्रदोऽहम्। 'वेत्ता सर्वस्य वेद्यस्य मुनिरित्यभिधीयते' इत्युक्तलक्षणानां सर्वार्थनिश्चयवतां मुनीनां मध्ये उत्तमो व्यासः सोऽहम्। वेदव्यासरूपेण चिन्तनीयोऽहम्। कवयः सूक्ष्मार्थदर्शिनः, तेषां मध्ये सूक्ष्मार्थनीतिरहस्यदर्शी यः शुक्राचार्यः सोऽहम्॥ ३७॥

कृष्णः—दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम्।

१ रा। २ वसुदेवसूनुत्वमत्र विभूतिः। अर्थान्तराभावादेवेति भाष्यम्। अर्थस्तु शास्त्रभृत्त्वं विभूतिरित्यत्रैव। न च शास्त्रभृत्त्वस्येव वसुदेवसूनुत्वस्यातिशयाधायकत्वाभावात् कथं विभूतित्वमिति शंक्यम्। लक्षणया वसुदेवसूनुशब्देन वसुदेवगृहे चतुर्भुजतया अवतारादेरतिमानुषस्य वैभवस्य ग्रहणात्।

मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

**दण्डनं कुर्वतां दण्डनाधिकृतानां संबन्धी यो दण्डः सोऽहम् । जेतुमिच्छतां जयानुकूला या नीतिः सोऽहम् । गोपनीयानां अर्थानां संबन्धी यत् मौनं तूष्णींभावः तदहम् । न हि तूष्णीम्भूतस्याभिप्रायो ज्ञायते । यद्यपि मौनं मौनेनार्थं गोपायतः पुंसः संबन्धि न तु गोपनीयार्थस्य । तथाऽपि तद्गोपनोद्योगे प्रवृत्तत्वात्तत्संबन्ध्यपि भवति । षष्ठ्यर्थः संबन्धोऽत्र विषयविषयिभावः । गुह्यानां विषये गोपनसाधनानि यानि तेषां मध्ये मौनमहम् । अत्र निर्धारणषष्ठ्यन्तमूह्यम् । ज्ञानवतां संबन्धि यत् ज्ञानं साक्षात्काररूपमपरोक्षज्ञानं तदहम् । परोक्षज्ञानं तु व्यवसायशब्देन पूर्वमुक्तम् ॥ ३८ ॥**

कृष्णः—यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।

**सर्वेषां भूतानां चेतनानामचेतनानां च बीजमुत्पत्त्यादेः कारणं प्रकृतिकर्मकालादिकं तदप्यहम् । हे अर्जुन त्वमेवं जानीहि ।**

कृष्णः—न तदस्ति विना यस्यान्मयाभूतं चराचरम् ॥ ३९ ॥

**चरमचरं वा यत् भूतं तत्सर्वं मदधिष्ठितमेव । मया विना यत् स्यात् तन्नास्ति । अहं सर्वत्र वर्ते । मदधिष्ठितमेव सर्वम् । तर्हि प्रथमान्तद्वितीयान्तपदोक्तभावेष्विव षष्ठ्यन्तपदोक्तभावेष्वपि तव विद्यमानत्वात् 'ज्योतिषां मध्ये रविरहम्' इत्यादि कथमिति चेत् यद्यप्यहं सर्वत्र वर्ते । मया विना किमपि नास्ति । तथाऽपि केषुचिद्भावेषु तेषामुत्तमत्वप्रदः सन् वर्ते । ता एव विभूतयः । अतः प्रथमान्तद्वितीयान्पदोक्तभावेष्वेवाहम्, न षष्ठ्यन्तपदोक्तेष्विति शङ्का ते मा भूत् ॥ ३९ ॥**

कृष्णः—नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।

एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

**वक्तुमर्हस्यशेषेणेति सर्वासां दिव्यानां विभूतीनां वचनं प्रार्थितं त्वया । न शक्यमशेषेण वक्तुम् । अतः दिव्यानामपि विभूतीनां मध्ये याः प्रधानभूताः ताः केवलं वक्ष्यामि इत्यभिहितं मया । उक्ताश्च काश्चित् प्रधानभूता विभूतयः । मम**

दिव्यानां विभूतीनां अन्तः पर्यवसानं नास्ति। न सर्वा दिव्या विभूतयो वक्तुं शक्याः पुरुषायुषेणापि। 'विस्तरेणात्मनो योगं विभूतिं च जनार्दन। भूयः कथये'ति प्रार्थितं त्वया। विस्तरेण विभूतीरहमचकथम्। तथाऽपि विस्तरोऽप्ययं संग्रह एव। १ दिव्यानामपि विभूतीनामानन्त्यात्। कुतो न सर्वास्ता उक्ता इति चेत् सर्वासां तासां वक्तुमशक्यत्वादेव। अत एव प्राधान्यतः कथयिष्यामीत्यभिहितं मया। २ विशेषमवधारय।

मन्दानामुपासनार्थं विभूत्युक्तिः। त्वं तु अन्तःशत्रुनिग्रहशीलोऽसि। अतस्त्वमुत्तमः। तवोपासनार्थं वक्ष्यते अथ वा बहुनेति। अर्जुन परन्तपोऽसि त्वम्। सकलशत्रुनिबर्हणसमर्थोऽसि त्वम्। तच्च परन्तपत्वं न त्वत्सामर्थ्यमूलकम्। किन्तु मत्सान्निधानमूलकम्। मत्सन्निधानविशेषादेव त्वं तादृशोऽसि। उक्तं चेदं मया 'पाण्डवानां धनञ्जयः' इति ॥ ४० ॥

अर्जुनः—

दिव्यासु विभूतिषु प्रधानभूताः काश्चिदुक्ता, मम दिव्यानां विभूतीनां अन्तो नास्ति। पुरुषायुषेणाप्यशेषेण ता वक्तुमशक्याः इत्युक्तम्। कथमनुक्ता विभूतयः मया ज्ञायेरन्नल्पमतिना। उक्तं च मया 'कथं विद्यामहं योगिन्नि'ति। अतस्त्वमनुक्तविभूतिपरिज्ञानाय कमपि मार्गमादर्शय।

कृष्णः—यद्यद्विभूतिमत् सत्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥ ४१ ॥

यद्यद्वस्तु विभूतिमत् विभूतिरैश्वर्यं अतिशयितमहैश्वर्यवत् श्रीमत् श्रीः सम्पत् शोभा वा अतिशयितश्रीमत् ऊर्जितं अतिशयितबलोपेतं महोत्साहोपेतं वा। विभूत्याद्यन्यतमोपेतं तत्तद्वस्तु मम तेजोंशसम्भवं विद्धि। ४ तेजोरूपेणांशेन सं सह भवतीति तादृशं तेजोरूपमदंशयुक्तं जानीहि।
५ मम तेजोरूपेणांशेन संभूतं उत्पन्नं विद्धि। ६ मम तेजसः एकदेशेन तथाविधमिति

१ प्रधानानां विभूतीनामुक्तौ विस्तरोऽयं संग्रह एव। यतः प्रधानविभूतीनमप्यन्तो नास्ति इति केचित्। २ तुशब्दार्थोयम्।

३ रा। ईशितव्यवत्। ईशितव्या नियाम्याः अनेकानियाम्यनियामकम्। ४ म।

५ ६ शं। रा। तेजोरूपोंशः तेजसः अंशः एकदेशो वा संभवः कारणं यस्य तादृशम्। संभवत्यनेनेति संभवः। तेजोंशेन तथा संभवो यस्य तादृशं च।

विद्धि। १ अंशेन संभूतं ममैव तेजो विद्धि। अतिशयितविभूत्यादिगुणैर्यद्यद्वस्तु लोकविलक्षणं तत्तदहम्। मत्सन्निधानविशेषेण विना तादृशत्वायोगात्। लक्षणमिदं उद्देश उक्तः। लक्षणेनानेन त्वमनुक्ता विभूतीर्जानीहि। एतादृशमेव वस्त्वहं नान्यत्। अहमेव नान्यः। न हि मदन्यस्य सन्निधानादीदृशत्वं संभवति ॥ ४१ ॥

अर्जुनः—

एता विभूतयः मन्दमतीनामुपास्याः इत्युक्तं त्वया अहमात्मा गुडाकेशेत्यत्र। मदुपास्यं रूपं ब्रूहि। किमिमाः सर्वेषामुपास्याः। उताधिकारभेदेन केषांचिदेव। कस्य रूपस्योपासने ममाधिकारः।

कृष्ण:—अथ वा बहुनैतेन किं ज्ञातेन तवार्जुन।
विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत् ॥ ४२ ॥

अथ वा उक्तविभूत्युपासनमेकः पक्षः। पक्षान्तरं ब्रवीमि। शृणु। हे अर्जुन एतेन ज्ञातेन बहुना विस्तरेण २बहुरूपविषयकज्ञानेन तव किं किं प्रयोजनम्। ३उत्तमाधिकारिणस्तवोपास्यमन्यत्। किं तदिति चेत् इदं समस्तं चेतनाचेतनात्मकं कार्यकारणात्मकं स्थूलसूक्ष्मात्मकं जगत् एकेन रूपेण व्याप्तेन बहिरन्तर्व्याप्तया धारयित्वा स्थितः। ४ एकेन पादशब्दितांशरूपैकदेशेन व्याप्य विधृत्य स्थितः। 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति श्रुतिः।

५ स्वमहिम्नामयुतायुतांशेन नियम्यं वशीकृत्य स्थितः। तदेव त्वं जगद्व्याप्तरूपं चिन्तय। एवमुत्तमत्वेन महीयमानानामहमेवोत्तमत्वप्रद इति 'मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय' इति मम सर्वोत्तमत्ववचनं युक्तम्। अतः सर्वोत्तममनुत्तमं असदृशं मां जानीहि ॥ ४२ ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे विभूतियोगाध्यायार्थप्रदर्शको दशमः प्रतिबिम्बः ॥

१ तेजः अंशसंभवमिति छेदः। २रा। ज्ञानेनेति पाठः। ३ म। ४ श्री।
५ रा। ६ रा। अत्र पराशरवचनं यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थितेति।

एकादशाध्यायप्रारम्भः ।

**सञ्जयः ।**

**एवं भगवतोक्ता विभूतीः श्रुत्वा भगवन्तं वासुदेवं सर्वोत्तमं परं ब्रह्म निश्चित्य परब्रह्मासाधारणं 'विष्टभ्याहमिदं कृत्स्नम्' इत्युक्तं महद्रूपं दिदृक्षुः तत्प्रदर्शनाय तमनुकूलयितुं तस्माल्लब्धं प्रयोजनं वदन् स्तौति। स्तुत्या प्रसन्नो हि कुर्यादभीष्टं जनः**

**अर्जुन उवाच—**

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

**देहात्माभिमानेन अहं ममेति मोहेन च मोहितं मां मोहापनयनादनुग्रहीतुं १आत्मपरमात्मविषयकं अत एव २सर्वोत्तमं गोपनीयं ३परमं रहस्यं वचनं 'नत्वेवाहं' 'अविनाशि तु' 'न जायते' 'नैनं छिन्दन्ति' 'अच्छेद्योयम्' इत्यादिकं त्वया परमया कृपयाऽभिहितम् । यद्वचनमभिहितं आत्मविषयकत्वादध्यात्मशब्दितेन तेन वचनेन ममायं मोहः विगतः निरवशेषं नष्टः ।**

**मदीया इमे । मया हन्यन्ते । अहं हनिष्यामि । युद्धमधर्मः । कृतेनानेन पापमेव स्यात् । पापिनां नरकवासो नियत इति यो मोहो मम बन्धुजनदर्शनादुदभूत्, यस्य मोहस्यापनयनाय नत्वेवाहं जातु नासं इत्यादिः तवोपदेशः सोऽयं मोहोऽद्य मे विनष्टः । सुमहानयं उपकारः । ४लोकानुग्रहाय मां निमित्तीकृत्येदमुक्तम् । मोहो मदीयो यथाऽनेन वचसा विगतः तथैवान्येषामपि मोहो विगमिष्यति । महानसौ लोकोपकारः । कोऽन्य एवं कुर्यात् कर्तुं वा शक्नुयात् । सुमहानसौ तव महिमा५ ॥ १ ॥**

**१ आत्मानं अधिकृत्य प्रवृत्तं अध्यात्ममिति संज्ञा अस्येति अध्यात्मसंज्ञितम्। २ परमं रहस्यमिति द्वे विशेषणे। ३ परमं यद्रहस्यं इत्येकमेव विशेषणम्। ४ मत् अनुग्र...इति छेदः। मत् इति पञ्चमी। मन्निमित्तमित्यर्थः। ५ श्लोके अक्षराधिक्यकरणं एतदध्याय प्रमेयस्य सर्वाधिक्यसूचनाय। श्रुतस्य शुश्रूषितार्थश्रवणस्य भविष्यतो दिदृक्षितरूपदर्शनस्य च अनुसन्धानजनितामन्दानन्दपारवश्यहेतुकानवधानसूचकमक्षराधिक्यकरणमित्यन्ये।**

कृष्णः ।

पार्थ किं मदुक्तार्थाननुसन्धाय परममन्दमानन्दमनुभवन् तज्जनितप्रीत्यतिशयेन मां स्तौषि उत लोकरीत्या मां स्तुत्या तोषयितुं केवलं मां स्तौषि । अद्य के तेऽर्था मन्मुखात् श्रुताः । तान् लेशतो ब्रूहि । द्वितीये तु प्रतारणार्थत्वाद्व्यर्थास्तुतिः॥

अर्जुनः—

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥

सर्वेषां चेतनानामचेतनानां च १ त्वत्तो जन्मनाशौ भवतः सकाशात् त्वन्मुखात् मया विस्तरेण श्रुतौ अक्षयं तव माहात्म्यमपि सर्वाधारत्वसर्वप्रवर्तकत्वसर्वान्तर्यामित्वसकलकल्याणसुगुणगणार्णवत्वादिरूपं त्वत्तः श्रुतम् ।
उक्तं हि त्वया । अहं कृत्स्नस्य जगतः प्रभवः प्रळयस्तथा । मयि सर्वमिदं प्रोतं 'मत्तः परतरं नान्यत्' 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' 'अन्तकाले च मामेव स्मरन्' 'मामुपेत्य तु कौन्तेय' 'यं प्राप्य न निवर्तन्ते' 'मया ततमिदं सर्वम्' 'अहं क्रतुरहं यज्ञः' 'अनन्याश्चिन्तयन्तो मां' 'मां हि पार्थ व्यपाश्रित्य' 'न मे विदुः सुरगणाः' 'यो मामजमनादिं च' 'भवन्ति भावा भूतानां' 'ददामि बुद्धियोगं तं' 'अहमात्मा गुडाकेश' 'न तदस्ति विना यत्स्यात्' 'यद्यद्विभूतिमत्सत्त्वम्' इत्यादिकम् । १ त्वत्तः भूतानां भवाप्ययौ श्रुतौ वेदे विस्तरशः; तौ त्वत्तो मया संग्रहेण श्रुतौ । तव माहात्म्यं श्रुतौ विस्तरशः तत् त्वत्तो मया संग्रहेण श्रुतम् । यस्मादेवं मया श्रुतम् तस्मान्मोहोऽयं विगतो मम । पुण्डरीकाक्षोऽसि त्वम् । त्वदपाङ्गवीक्षणं अलं मम सकलशोकापनोदाय । यथा 'कप्यासं पुण्डरीकमेवमाक्षिणी तस्ये'त्युपनिषदाभिहितपुण्डरीकाक्षत्वाविशिष्टं परं ब्रह्मासि त्वम् ।

१ त्वत्त इत्यस्य भवाप्ययौ श्रुतौ इत्युभाभ्यामन्वयः।

इयं उक्तरूपस्यैव मोहस्य निवृत्तिः न तु सर्वस्य । तथात्वे इतः परं उपदेशप्रश्नयोरयोगात् । सर्वमोहनिवृत्तिस्तु 'नष्टो मोहः' इति वक्ष्यते । अयं च विशेषः अत्र अयं मोहः इति, तत्र मोह इति चोक्त्या ज्ञायते । उक्तं च भगवता प्रथममस्य मोहस्य निवृत्तिः पश्चात् मोहसामान्यस्येति 'यत् ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव । येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयी'त्यनेन ।

उक्तं च मया परं ब्रह्मेत्यादि । एतदर्थानुसन्धानजनितपरमानन्दानुभवसमुपजातप्रीत्यतिशयेन स्तौमि त्वामहम् ॥ २ ॥

कृष्णः ।

अभिहितं मया मन्माहात्म्यं श्रुतं च त्वया । किं तत्र संशयो वर्तते । उत न । मदुक्तश्रवणमात्रेण मोहो नापगच्छेत् । किन्तु संशयविपर्ययराहित्येन श्रद्धायां सत्याम् ।

अर्जुनः ।

एवमेतद्यदात्थ त्वं आत्मानं परमेश्वर ।

हे परमेश्वर कृष्ण त्वं त्वां प्रति येन प्रकारेण यत् एतत् वदसि अनेन प्रकारेणैव न तत्र लेशतोऽपि भेदः न मनागपि मम तत्राविश्वासः । ईश्वराणां ब्रह्मादीनां ईश्वरस्त्वमसीति विश्वसिमि । अतो मोहो विगतो मम ॥ २ ॥

कृष्णः ।

किमर्थमेवं मां स्तौषि । किं वाऽभिलषितं तव । ब्रूहि तत् । करोमि तेऽभिलषितम् ।

अर्जुनः ।

द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

तव रूपं द्रष्टुमिच्छामि । अपसार्य कञ्चुकं उत्तरीयं च सम्यक् प्रदर्शयामि । ममेदं रूपं पश्य इति चेत् दृष्टवाहीदं मानुषं ते रूपं त्वां मामिव मानुषं मत्वा त्वामसकृदसत्कृत्य जातोऽहमपराधी । वंचिता लोकास्त्वया मानुषरूपप्रदर्शनेन दृष्ट्वेदं मानुषं रूपं मानुषं हि त्वां मत्वाऽवजानन्ति । उक्तं च त्वया । 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः' 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ॥' इत्यादि । अतो नेदं रूपं द्रष्टुमिच्छामि । किन्तु ईश्वरस्य परब्रह्मणो यदसाधारणं व्याप्तं विश्वरूपं तत् द्रष्टुमिच्छामि । प्रदर्शनीयं तत् कृपया । आश्रितजने अयमेवं वदति एवमिच्छति कथमिदं इति दोषदर्शिनः कापुरुषाः । त्वं तु पुरुषोत्तमोऽसि । अतो विश्वरूपप्रदर्शनप्रार्थनमिदं मदीयं माऽपराधं मंस्थाः । नायं

---

१ श्रुतौ इत्यस्यावृत्तिः । एकं सप्तम्यन्तं मतौ इति यथा । अन्यत् प्रथमाद्विवचनान्तम् । विस्तरशः श्रुतौ । श्रुतौ विस्तरशः । इत्युभयथाऽन्वयः । इदं पूर्वस्मिन् पुटे १७ पंक्तौ '१ त्वत्तः' इत्यत्र टिप्पणम् ।

निर्बन्धः अपि तु प्रार्थना यद्यनुग्रहः प्रदर्शय । पुरुषोत्तमत्वात् सर्वज्ञोऽसि । अतस्त्वमेव जानासि दृष्ट्वा कृतार्थी भवितुमयं दिदृक्षते । न तु मद्वचस्यविश्वासेनेति । अतो कृपया दर्शय ॥ ३ ॥

सञ्जयः ।

अशक्यं हि तद्रूपमनेन द्रष्टुम् । अशक्ये विषये कुतोऽस्याभिलाषः । इत्युक्तमितैकभूलतमालोचयन्तं भगवन्तमवलोक्य किमप्ययमालोचयति द्रष्टुमशक्यमिदं अतो न दर्शयेयं इति यदि ब्रूयात् तर्हि किं कर्तव्यमिति चिन्ताकुलः पार्थः विदिततदीयाभिसन्धिस्तमर्थयते ।

अर्जुनः ।

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

तद्रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे तर्हि मह्यं त्वमव्ययमात्मानं दर्शय । योगशब्दितानां सर्वेषामुपायानां कर्तुमकर्तुमन्यथाकर्तुमीश्वरः अत एव तत्तदुपायविरचनसमर्थश्च त्वमसि । अतो येनोपायेन तव तद्रूपमहं द्रष्टुं शक्नुयाम् तमुपायं कृत्वा दर्शय । १योगः एषामस्तीति योगाः योगिनः तपोविभवलब्धाणिमाद्यष्टैश्वर्यसिद्धिमन्तः तेषामीश्वरोऽसि । मन्यसे चेत् किं तवाशक्यम् । २ व्याप्तं रूपं दर्शय ॥ ४ ॥

सञ्जयः ।

एवमभ्यर्थ्य तूष्णीं स्थितं किं वाऽयं भगवान् वक्ष्यतीति चिन्ताकुलं पार्थं शंकानुन्मेषाय कर्तृकर्मसम्बन्धिपदोक्तेः पूर्वमेव पश्येत्युक्त्वा सन्तोषयन्नाह भगवान् वासुदेवः । प्रसिद्धा चेदृशी पश्येत्युक्तिरीतिरेतादृशेऽवसरे ।

श्रीभगवानुवाच ।

कृष्णः—पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

---

१ शं । म. केचित् योगिनः उपायवन्तः तेषामीश्वर तेषां तादृशशक्तिप्रद । २ व्ययः देशतो न्यूनता तद्रहितं आत्मानं त्वां दर्शय । व्याप्तं त्वद्रूपं दर्शयेत्यर्थः । रा । अव्ययमिति क्रियाविशेषणम् । त्वां सकलं मे दर्शयेत्यर्थः ।

पार्थ पश्य मे १ रूपाणि एकरूपदर्शनं त्वयाऽर्थितम् । दर्शयाम्यहमनेकानि रूपाणि । अथ शतशः । अथ सहस्रशः । शतानि सहस्राणि अपरिमितानि । अथ नानाविधानि अथ दिव्यानि अद्भुतानि अनेकाद्भुतदर्शनानि अप्राकृतानि च । अथ नानावर्णानि नानावयवसन्निवेशविशेषाणि च पश्य । अनेकरूपसमुदायरूपं दर्शयिष्यमाणं तद्रूपं प्रथमं सामान्यतो दृष्ट्वा २ अनन्तरं समुदायघटकरूपाणि तत्तत्संख्याः संख्यातीततां तत्तद्गतवर्णाकृतिभूषणायुधविशेषांश्च सावधानो द्रष्टुमर्हसि । ३ कृत्स्नानि रूपाणि ईदृशानि ॥ ५ ॥

सञ्जयः ।

दर्शयिष्याम्यस्य तदद्भुतं रूपम् । तच्च तेजोमयम् । तस्य च तेजः दिवि युगपदुत्थितानेककोटिसूर्यतेजसः सदृशं अधिकं च । वक्ष्यते च 'दिवि सूर्यसहस्रस्ये'ति । अतस्तस्मिन् रूपे द्रष्टव्येषु किमप्ययं न पश्येत् । अतः इदमिदमस्मिन् रूपे त्वया द्रष्टव्यमिति प्रदर्शनात् प्रागेव वक्तव्यम् स्मृत्वा एतद्वचनं सावधानो द्रष्टव्यं पश्येदिति मत्वा करुणावरुणालयो भगवानिदमिदमस्मिन् रूपे पश्येत्याह ।

कृष्णः—पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥

दर्शयिष्यमाणे ४ इह मम देहे आदित्यान् द्वादश वसूनष्टौ रुद्रानेकादश अश्विनौ द्वौ तथा मरुतः एकोनपञ्चाशतं पश्य हे अर्जुन इतः पूर्वमदृष्टानि बहून्याश्चर्याणि पश्य । ईदृशमहाद्भुतरूपदर्शनभाग्यवता त्वया शाकुन्तलेयस्य दौष्यन्तेर्भरतस्य चक्रवर्तिनो वंशो विभूष्यते । अतस्त्वमेव भारतोऽसि ॥ ६ ॥

अर्जुनः ।

किमेतावदेव वा तव रूपे द्रष्टव्यं मया । उत इतोऽप्यन्यत् किमपि ।

कृष्णः—इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश

हे अर्जुन दर्शयिष्यमाणे इह मम रूपे स्थावरजङ्गमात्मकनानावस्तुनिचितं कृत्स्नं

१ घटकरूपबहुत्वापेक्षया बहुवचनम् । २ अथ अनन्तरम् । ३ अथ कृत्स्नानि रूपाणि । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ'इत्यमरः । ४ मम देहे इत्युत्तरश्लोकस्थम् ।

जगत् एकस्मिन्नेव देशे स्थितं त्वं इदानीं पश्य ।
तत्र तत्र परिश्रमवता त्वया वर्षसहस्रकोटिभिरपि यद्यत् द्रष्टुमशक्यं तत्तद-स्मिन् रूपे एकत्रैव द्रक्ष्यसि। सावधानः पश्य ।

सञ्जयः ।

अस्मिन् रूपे बहून्याश्चर्याणि पश्य । कृत्स्नं जगत् पश्य। इति वदत्ययं भगवान् । सर्वमप्यस्मिन् रूपे द्रष्टुं शक्यमिति भाति । अत्रैकमवश्यं मम द्रष्टव्यम् । 'यद्वा जयेम यदि वा नो जयेयुः, न चैतद्विद्मः' तद्ब्रूहि इति प्रार्थितोऽयं कृष्णो जयं पराजयं वा नास्माकमभ्यधात् । 'हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इति वदन् भगवान् जयपराजययोरन्यतरानिश्चयं सूचितवान् । अतस्तद-स्मिन् रूपे सर्वार्थप्रदर्शके द्रष्टव्यमवश्यं मयेति जयापजययोरन्यतरदर्शनमभिलषित-वानर्जुनः । अन्तर्यामितया विदिततदीयाशयो भगवान् तदपि पश्येत्याह ।

कृष्णः—

यच्चान्यत् द्रष्टुमिच्छसि ॥ ७ ॥

इतोऽन्यत् यत् द्रष्टुमिच्छसि तच्च पश्य । तच्च 'यद्वा जयेम यदि वा नो जयेयुः' इत्येतत् । कृष्णस्तु न वदति अतोऽत्र द्रष्टव्यमिति न किममंस्थाः । जानाम्ये-वाहमन्तर्यामित्वात् त्वदभिलषितम् । पश्य तदपि ॥ ७ ॥

अर्जुनः ।

दर्शय दिव्यं रूपं सावधानस्तत्तत् द्रक्ष्यामि द्रष्टव्यमखिलम् ।

कृष्णः—न तु मां *शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।

दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

दर्शयामि। पश्य किन्तु तत्रैको विशेषः । दर्शयिष्यमाणदिव्यरूपोपेतं सकलेतर-वस्तुविजातीयं मां विश्वरूपं अनेन प्राकृतेन स्वेन चक्षुषा द्रष्टुं नैव शक्नोषि तादृ-शो विशेषस्तस्य रूपस्य । कथं तर्ह्यहं पश्येयम् । पश्येत्युक्तं हि त्वया। कमुपायं करोषीति चेत्; दिव्यं रूपं द्रष्टुकामाय ते अप्राकृतमलौकिकं दिव्यरूपदर्शन-क्षमं चक्षुर्ददामि दिव्यं चक्षुर्ददामीति वदसि कथं वा ददासि प्राकृतमिदं चक्षुः किं वा करिष्यसीति चेत् चिन्तातङ्कस्ते मा भूत् किमपि न करोमि मदीयया

*१ रा॥ शक्ष्यसे इति पाठः॥

अघटितघटनापटीयस्या शक्त्या निर्बाधमेव दिव्यं ते चक्षुर्ददामि ईश्वरासाधारणं मदीयं सामर्थ्यातिशयं पश्य । ईश्वर एवाहम्, न तु यो वा को वा । पश्येदानीम् ॥ ८ ॥

धृतराष्ट्रः ।

भगवानेवमुक्त्वा किमकार्षीत् ।

सञ्जय उवाच ।

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

एवमुक्त्वा दिव्यं चक्षुर्दत्वा ततः पार्थाय भगवान् परब्रह्मासाधारणं सर्वोत्तमं दिव्यं रूपं दर्शयामास । राजन्निदमवधानेन शृणु । परमो हि पार्थे भगवतोऽनुग्रहः । महदिदमनितरसाधारणं भाग्यं पार्थस्य । पितृष्वसुः कुन्त्याः सुत इति हि तादृशी प्रीतिः पार्थे भगवतः ।

यो भक्तः तस्य मानसं क्लेशं १ हरति सः । २ संहरति च सर्वं जगदनेन रूपेण । हरति च भागं सर्वेषु ३यज्ञेषु । कथमिदं तस्य घटत इति चेत् ४ महतां योगशाब्दतानामुपायानां सामर्थ्यविशेषाणां वा ईश्वरो हि सः तत्तत्कार्यौपयिकं तं तमुपायं कुर्यात् । चिकीर्षितमखिलमुपायेन साधयेत् । तादृशं हि सामर्थ्यं तस्य । महान् ५ योगिनामीश्वरश्च सः । स हि ६ ईश्वरः अत एव महती शक्तिस्तस्य ॥ ९ ॥

धृतराष्ट्रः ।

तत्कीदृशं ब्रूहि ।

सञ्जयः ।

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

१ । २ । ३ । हरतीति हरिः । ४ म । रा महान्तश्च ते योगाश्च तेषामीश्वरं । ५ शं । योगानां योगिनामीश्वरः योगेश्वरः महांश्चासौ योगेश्वरश्च महायोगेश्वरः । योगः माया । ६म । महान् योगः शक्तिः यस्य सः महायोगः । स चासौ ईश्वरश्च महायोगेश्वरः ।

तस्मिन् रूपे अनेकानि मुखानि नेत्राणि च। अनेकेषां आश्चर्याणां दर्शनं तस्मिन् रूपे। अनेकानि अद्भुतानि दर्शनानि तस्य। दिव्यानि अनेकानि आभरणानि तस्मिन् रूपे। दिव्यानि अनेकानि उद्यतानि आयुधानि तस्मिन् रूपे दृश्यन्ते। दिव्यं पुष्पं वस्त्रं च तत्र तत्र धृतं दृश्यते तत्र रूपे। १ गन्धानुलेपो दिव्यस्तस्य। तस्य यो २ऽनुलेपः तस्य दिव्यो गन्धः। 'बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत' इत्युक्तरीत्या सर्वाश्चर्य-वस्त्वा ३ त्मकम्। तादृशवस्तु ४ प्रचुरं ५ क्रीडादिगुणविशिष्टं तद्रूपं। विलक्षणम-हादिव्यकान्ति ६ युक्तं तद्रूपं। सर्वत्र नास्त्यन्तस्तस्य। सर्वदिक्षु मुखानि तस्य। ता-दृशं रूपं दर्शयामास। स च पार्थः प्रथमं सामान्यतो रूप ततस्तत्रत्यान् वक्त्रा-द्यवयवान् ततस्तत्रत्यान्यनेकान्याश्चर्याणि ततस्तत्रत्यानि दिव्याभरणानि ततो दि-व्यायुधानि ततस्तत्रत्यानि वसनकुसुमादीनि ततस्तदीयमङ्गरागं च ततस्तस्य सर्वाश्चर्यमयत्वदेवत्वानन्तत्वविश्वतोमुखत्वादीनि च क्रमेण ७ ददर्श। वार्णितं च मया तद्रूपमनेनैव क्रमेण ॥ १० ११ ॥

धृतराष्ट्रः।

किमिदं रूपं प्राकृतेन चक्षुषा द्रष्टुमशक्यम्। किं वा प्रभा तादृशी दुर्दर्शा तस्य। कुतो दिव्यं चक्षुरददात् देवः।

सञ्जय उवाच।

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता।
यदि भाः सदृशी सा स्यात् भासस्तस्य महात्मनः ॥ १२ ॥

अन्तरिक्षे युगपत् ८ उदितस्य सूर्याणामनेकसहस्रस्य प्रभा यदि युगपदुत्थिता भवेत् सा समुदितप्रभा महात्मनो विश्वरूपधरस्य तस्य देवस्य प्रभायाः सदृशी स्यात्। तादृशी दुर्दर्शा सा प्रभा बुद्ध्यारोहार्थमेवमुक्तम्। वस्तुतस्तु सा सदृशी स्यादिति

---

१ म. दिव्यं, गन्धानुलेपनं यस्य तत्। २ शं दिव्यो गन्धो यस्य तत् दिव्य-गन्धंअनुलेपनं अङ्गरागो यस्य तत्। ३ म। ४ शं। ५ म। ६ शं।

७ अत्र 'चयस्त्विषामित्यवधारितम्' इति माघे १सर्गे ३ श्लोकोऽनुसन्धेयः।

८ न कदाऽपि दिवि युगपदनेकसहस्रसूर्योदयसम्भवः। अत इयमभूतोपमा।

'उभौ यदि व्योम्नि पृथक्पतेतामाकाशगङ्गापयसः प्रवाहौ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥' इति माघे

काकुः न स्यात् । ततोऽप्यतिशायिता तस्य देवस्य प्रभा । अतस्तां द्रष्टुं दिव्यं चक्षुर्दत्तं भगवता ॥ १२ ॥

धृतराष्ट्रः ।

पश्यादित्यानित्यादिना रूपेऽस्मिन् यद्यत् द्रष्टव्यतयोक्तं तत्तदखिलमर्जुनः किं दृष्टवान्

सञ्जयः ।

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

पार्थो विश्वरूपदर्शनदशायां देवदेवस्य तस्य विश्वरूपधरस्य भगवतः तस्मिन् शरीरे देवदानवमानवपशुपक्षिसरीसृपादिभेदभिन्नं कृत्स्नं जगत् एकस्मिन्नेव देशे विद्यमानमपश्यत् ॥ १३ ॥

धृतराष्ट्रः ।

किं परमदुःसहाद्भुततेजोदर्शनादर्जुनो विभयांचकार । नेत्रे निमीलयांबभूव । कर्तव्यं विसस्मार । तस्माद्देशादपससार ।

सञ्जयः ।

ततः सविस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

तादृशदिव्यरूपदर्शनानन्तरं तद्दर्शनजनितविस्मयेन व्याप्तः अतो रोमांचितसर्वाङ्गः स पार्थः तादृशप्रभायुक्तं तं देवं भक्तिश्रद्धातिशयपुरःसरं शिरसा नत्वोत्थाय शिरस्यञ्जलिं बध्वा अभाषत । सर्वान् जनपदान् राज्ञो विजित्य धनं प्रभूतमाहृतवान् हि सः । तेजसा अग्निसदृशो हि सः । ईदृशस्याप्यस्य दुःसहमाश्चर्यावहमिदं रूपमित्यहो महिमा तस्य देवस्य । अत्र परमाद्भुतवस्तुदर्शनादर्जुनस्य विस्मयाख्यो भावः प्रादुरभूत् । तस्य च तादृशो भगवानालंबनविभावः । तद्रूपमुद्दीपनविभावः । असकृत्तद्दर्शनप्रणामाञ्जलिकरणादयोऽनुभावाः । रोमांचादयः सात्त्विकभावाः । धृतिमतिहर्षवितर्कादयो व्यभिचारिभावाः । स च स्थायी भूत्वा एतैःपरिपोषं नीतोऽद्भुतरसोऽभूत् * ।

* अत्र— निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ।

श्रोतॄणां च तद्भेदाध्यवसायादद्भुतरसोदयः । स च परमानन्दास्वादरूपो रसः । इयं च रसोत्पत्तिः 'विस्मयाविष्टः' 'हृष्टरोमा' 'प्रणम्य' 'कृताञ्जलिः' इत्येतैः पदैः सूचिता । राजन् इदं विमृश ॥ १४ ॥

धृतराष्ट्रः ।

देवं प्रणम्य कृताञ्जलिः किमभाषत ।

सञ्जयः ।

पश्यामि देवांस्तवेत्यादि वक्ष्यमाणम् ।

अर्जुन उवाच ।

अर्जुनः ।

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थ ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥

हे देव तव देहे सर्वान् देवान् पश्यामि । उक्तं हि त्वया 'पश्यादित्यान् वसून् रुद्रानि'ति । तथा सर्वान् स्थावरजङ्गमभेदभिन्नानां जरायुजाण्डजस्वेदजोद्भिज्ज-भेदभिन्नानां प्राणिनां समूहान् पश्यामि । ब्रह्माणं पश्यामि । १ तदङ्कगतं शिवं पश्यामि । २ तदा ऽऽज्ञानुवर्तिनं पश्यामि ।

सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान् ।
यावद्रसं वर्तमानः स्थायिभाव उदाहृतः ।
विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च नवैवामी रसाः स्मृताः ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयशमाः स्थायिभावा नव क्रमात् ॥ इत्याद्यनुसन्धेयम् ।

१ म । अत्र 'विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्कगतो हरः ।' इति पाद्मपुराणवचनमनुसन्धेयम् । २ रा । अहं तस्मिन् राजनि वर्ते इत्युक्ते तेन वक्ष्यमाणस्तदाज्ञानुवर्ती वर्ते इति हि प्रतीयत इति भावः । म । रा । विशेषणविशेष्यभावेन एकवस्तुवाचिनोः पदयोर्मध्ये वस्त्वन्तरवाचिपदप्रयोगोऽनुचितः । अतः कमलासनस्थमिति ईशस्यैव विशेषणमिति भावः ।

१ पृथिवीपद्मकर्णिकाभूतमेरुरूपासनस्थं त्वन्नाभीकमलासनस्थं च सर्वासां प्रजानामीशितारं चतुर्मुखं ब्रह्माणं पश्यामि। सर्वान् ऋषीन् वसिष्ठादीन् पश्यामि। वासुकिशेषप्रभृतीन् भुजगान् पश्यामि। २ अत्र रूपे दृश्यमानाः सर्वेऽपि परमाद्भुताकारा दृश्यन्ते।

इह तव रूपे कृत्स्नं जगदेकस्थं पश्यामि। उक्तं हि त्वया 'इहैकस्थं जगत्कृत्स्नमि'ति। इदं परमाद्भुतम्— यदखिलं जगदहमिह तव दिव्यरूपे एकस्थं पश्यामि। अहो मम भाग्यातिशयः। ३ तव मानुषे रूपे नैतेष्वेकमप्यहमद्राक्षम्। इदानीं परमया कृपया प्रदर्शिते त्वदीये ऐश्वरे रूपे पश्यामि सकलं जगत् ॥ १५ ॥

अर्जुनः—

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्।
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

जगदीश्वर ४ व्याप्तरूप तव अनेकान् बाहून् अनेकानि उदराणि वक्त्राणि नेत्राणि च पश्यामि। पुरस्तात् पृष्ठतः पार्श्वयोश्च तवानन्तानि रूपाणि पश्यामि। तव आदिः मध्यं अन्तो वा न दृश्यते। परमाद्भुतमिदं रूपम्। ५ जगदखिलमस्मिन् रूपे दृश्यते ॥ १६ ॥

अर्जुनः—

किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम्।
पश्यामि त्वां दुर्निरीक्ष्यं समन्तात् दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

हे देव तवास्मिन् रूपे सर्वेषु शिरस्सु किरीटानि। तेषु तेषु बाहुषु गदाः। तेषु तेषु हस्तेषु चक्राणि पश्यामि। ६ किरीटादीनि परमाद्भुतानि। त्वं तु तेजसां राशिरिव दृश्यसे। सर्वत्र कान्तिः अन्यादृशी वर्तते। ७ सर्वतोदीप्ताग्निसूर्यतुल्यप्रभोऽसि। अतो नैकस्मिन्नपि भागे द्रष्टुं शक्योऽसि। अतः सम्यक् दृष्ट्वा एवंभूतोऽयं वर्तत इति निश्चेतुं न शक्यते त्वद्दत्तदिव्यचक्षुषाऽपि मया। तथापि त्वद्-

---

१ शं। २ दिव्यानित्यस्य सर्वत्र संबन्धः। ३ देवदेहेत्येकं पदं। ४ विश्वं व्याप्तं रूपं यस्य तादृश। ५ विश्वं जगत् रूपं यस्य तादृश। ६ इनिप्रत्ययार्थोऽयं। ७ समन्तादित्यस्य सर्वत्र संबन्धः।

नुग्रहात् एतादृशं त्वां सर्वतः पश्यामि ॥ १७ ॥

अर्जुनः—

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

हे देव त्वं परमं अक्षरं 'अक्षरं ब्रह्म परममि'ति त्वयोक्तं परं ब्रह्मैव । त्वं परमं वेदितव्यं ज्ञातव्येषु प्रधानम् । अस्य जगतः परमः आश्रयः । त्वं वृद्धिह्रासरूपविकाररहितः नाशरहितश्च । वेदादिषूच्यमानस्य १ परम्पराप्राप्तस्य धर्मस्य त्वमेव नानावतारैः रक्षकोऽसि । अनादिरेव त्वं । यः पुरुषः 'वेदाहमेतं पुरुषं महान्तम्'इत्यादिषु श्रूयते स पुरुषसूक्तोक्तः पुरुषो भवानेव इति त्वं मे सम्मतः । 'अव्यक्तोऽक्षर इत्युक्त' इति 'वेद्यं पवित्रमोंकार' इति 'निधानं बीजमव्ययमि'ति 'अजोऽपि सन्नव्ययात्मा' इति 'धर्मसंस्थापनार्थाय सम्भवामि' इति 'यो मामजमनादिं च' इति 'पुरुषः स परः पार्थ' इति वदति त्वयि, कथमात्मानमेतादृशं ब्रूतेऽयं, कथमक्षरत्वादिकं अस्य, इति शङ्कमानोऽवर्तिषि । एतावतः त्वन्महिम्नः श्रवणात् त्वदीयपरमाद्भुतसकलजगदाश्रयदिव्यरूपदर्शनाच्चेदानीं विगतशङ्कोऽहं, त्वं त्वदीयमहिमकथनावसरे आत्मप्रशंसा भवतीति मत्वा यावद्वक्तव्यं तावदनुक्त्वा किञ्चिदेवावादीः ततोऽधिकं वक्तव्यं इति निरचिनवम् । न तत्राक्षरत्वादिकं साधारणं किन्तु परमम् । नायमुपचारः किन्तु सत्यं ब्रवीमि । जानास्येव त्वमयं सत्यं वदतीति । सर्वान्तर्यामी त्वम् । त्वदीयमव्ययत्वादिकं सत्यं मन्ये इति 'सर्वमेतदृतं मन्ये' इति निवेदितं पूर्वं मया । इदानीं तु तदव्ययत्वादिकं अनन्यसाधारणं सर्वोत्तममिति निरचिनवमिति विज्ञाप्यते ॥ १८ ॥

अर्जुनः—

अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

हे देव आदिमध्यान्ताः तव न सन्ति । कालतः ते तव न सन्ति । अतः न तानहं पश्यामि । उक्तं हि मया 'नान्तं न मध्यं न पुनस्तवादिं पश्यामी'ति । उत्पत्ति-

---

१ शं शाश्वत इति संबोधनं वा । शश्वत् सदा एकरूप्येण विद्यमानस्त्वमसि ।

स्थितिलयाः तव न सन्ति। त्वदीयस्य प्रभावस्यान्तो नास्ति। तवानेक १ बाहूदरवक्त्रनेत्रादयो दृश्यन्ते। त्वं शशिसूर्यनेत्रोऽसि । २ चन्द्रसूर्यौ तव नेत्रयोर्वर्तेते । नेत्राभ्यामुत्पन्नौ । ३ तावेव तव नेत्रे । तव ४ सर्वाणि नेत्राणि भक्तानां विषये शशिवत् प्रसादयुक्तानि। अभक्तानां विषये सूर्यवत्प्रतापयुक्तानि । दीप्ताग्निस्तव मुखे वर्तते । मुखादुद्भूतः स एव तव मुखं स इव सर्वसंहारानुगुणं ते वक्त्रं तव तेजो विश्वमिदं तापयति एतादृशमहाद्भुतरूपं त्वां पश्यामि ॥ १९ ॥

अर्जुनः—

द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।

दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

हे देव इदं ५ स्वर्गभूम्योरन्तरालं ६ द्युशब्दगृहीतानां उपरितनलोकानां पृथिवीशब्दगृहीतानां अधस्तनलोकानां च मध्ये योऽयं लोको वर्तते मध्यमलोकशब्दितं एतद्रूपमन्तरं एकेन त्वया व्याप्तं। इदं द्यावापृथिव्योरन्तरं सर्वाश्च दिशोऽनेन रूपेण व्याप्य तिष्ठसि । हे ७ व्याप्तरूप अतः अद्भुतं तव उग्रं इदं रूपं दृष्ट्वा त्रयो लोका नितरां भीताः। लोकत्रयं भीतमहं पश्यामि । अत इदमुपसंहर। त्वं तु परमोदार८ स्वभावोऽसि । ९ महामनाश्च। अतो दयया इदमुपसंहर ।

महाद्भुतदर्शनाय तुभ्यं किल मया दिव्यं चक्षुर्दत्तम् । तेन चक्षुषा त्वमेव हि मां पश्यसि। दृष्ट्वा लोकत्रयं प्रव्यथितमिति कथं दर्शनप्रसक्तेरभावादिति चेत् १० लोकत्रयशब्देन तत्रत्यभक्तवर्गग्रहणम् । लोकत्रयस्था भक्ताः दृष्ट्वा बिभ्यतीत्यर्थः। ११ विश्वरूपं दृष्ट्वा भीतोऽहम्। यद्यहमिवान्येऽपि पश्येयुरिममुग्रं रूपं तर्हि नितरां व्यथेरन् इत्याशयेन दृष्ट्वा लोकत्रयं प्रव्यथितमित्युक्तम्। प्रव्यथितं भवेदित्यर्थः। १२ दिव्यं चक्षुर्मह्यं दत्तम् तेनान्य चक्षुषा द्रष्टुं न शक्यते । न दत्तमन्येभ्यो दिव्यं चक्षुः इदं च रूपं व्याप्तम् । अतो लोकत्रयस्थैः प्राकृतेनैव चक्षुषा दृश्येत दर्शने

१ रा भाष्यम् । एकस्मिन् दिव्यदेहे अनेकोदरादिकं कथम् । इत्थमुपपद्यते। एकस्मात् कटिप्रदेशात् अनन्तपरिमाणात् ऊर्ध्वमुद्गताः यथोदितोदरादयः । अधश्च यथोदितदिव्यपादाः । तत्र एकस्मिन् मुखे नेत्रद्वयमिति न विरोधः । २ म। शां। ३ रा । ४ म। ५ शां । ६ रा। ७ म। ८ शां। ९ रा। १० म। ११। १२ शां

च नितरां बिभीयुरित्याशयेनैवमुक्तम् । १ युद्धदर्शनार्थमागत्य नभसि स्थितानां देवासुरगन्धर्वसिद्धयक्षराक्षसादीनां मध्ये केचित् सात्त्विकाः अनुकूलाः केचित् तामसाः प्रतिकूलाः केचिद्राजसा उदासीनाः। त्रिविधास्ते जनाः दृष्ट्वा बिभ्यति, पश्यामि । कथं दिव्यचक्षुर्विहीनास्ते पश्येयुरिति चेत्। दत्तमेवं दिव्यं चक्षुस्त्वया त्रिविधेभ्यस्तेभ्यः । किमर्थमिति चेत् । दृष्ट्वा बिभ्यतस्तान् दृष्ट्वा देवासुरादिभिरपि द्रष्टुमशक्यमिदं महदद्भुतं रूपं प्रदर्शितं मह्यं परमया कृपया पश्यामि भगवतोऽनुग्रहेणेति कृतज्ञतोपज्ञविज्ञानेन पार्थोऽयं श्रद्धाभक्त्यतिशयवान् भूत्वा कृतार्थीभवत्वित्येवं मदनुग्रहार्थं । अत उक्तं दृष्ट्वा लोकत्रयं प्रव्यथितमिति । अन्येषां दुर्दर्शमिदं मम सुदर्शमभूदित्यहो मयि तव कृपारसातिशयः ॥ २० ॥

कृष्णः ।

दृष्ट्वा लोकत्रयं प्रव्यथितमित्युक्तं तत्र के के किं किं कुर्वन्ति ।

अर्जुनः ।

अमी २ हि त्वां सुरसंघा विशन्ति केचित् भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥

हे देव देवसंघाः त्वां विशन्ति । ते च प्रविशन्तो मया दृश्यन्ते । त्वत्समीपमागच्छन्ति। केचित् भिया दूरत एव स्थित्वा कृताञ्जलयः सन्तः त्वां प्रति जय जय रक्षरक्षेत्यादिकं किमप्युच्चारयन्ति । तदप्यहं पश्यामि महर्षीणां सिद्धानां च संघाः त्वां दृष्ट्वा भक्त्या स्वस्तीति ४ मङ्गलाशासनं कृत्वा तदनन्तरं स्तुवन्ति। महोग्ररूपं दृष्ट्वा सकलभुवननाशमाशङ्क्य तत्परिहाराय स्वस्ति मङ्गलं भवतु इति ४ मङ्गलसूक्तादिकं उदीरयन्तः अर्थपूर्णाभिः स्तुतिभिः त्वां स्तुवन्ति। इतरेषां स्तुतिषु अर्थपूर्तिर्न स्यात् । परिमितगुणा हि ते। त्वं तु अपरिमितगुणः । अतो यावत् स्तुवन्ति ततोऽधिकगुणवत्त्वात् तव त्वद्विषये स्तुतयोऽर्थपूर्णा एव । तादृशीभिः स्तुतिभिः

१ रा। २ अत्र प्रकरण त्वा त्वां इत्युभयथा पाठो दृश्यते। हि तु आ इति च छेदः। आविशंतीत्यन्वयः। शं भा मधु। अत्र तु श्री(?)त्वा इत्येव पाठः । त्वासुर· त्वां असुर इत्युभयथाछेदः। मनुष्यत्वेनावतीर्णा देवानां संघाः असुराणां संघाश्च त्वां विशंति। अत उभयोस्सेनयोर्नाशस्सूच्यते। यच्चान्यद्द्रष्टुमिच्छसीत्युक्तस्य प्रदर्शनमिदं ।

स्तुवन्ति । अखिलमिदमहं प्रत्यक्षतः १ पश्यामि ॥ २१ ॥

कृष्णः ।

सुरसंघा विशन्ति केचिद्भीता गृणन्तीत्युक्तं त्वया के ते किं कुर्वन्ति ।

अर्जुनः ।

रुद्रादित्या वसवो ये च साध्याः विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघाः वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥

रुद्राश्च आदित्याश्च वसवश्च साध्यनामानो देवाश्च विश्वदेवनामानो देवाश्च अश्विनौ च मरुतश्च उष्णादन्नादुत्पद्य उपरि गच्छत् धूमायमानं वस्तु ऊष्मा, तं पिबन्ति पितरः । ऊष्मभागा हि पितरः इति श्रुतिः । ऊष्मपशब्दिताः पितरश्च । गन्धर्वयक्षासुरसिद्धानां संघाश्च त्वां वीक्षन्ते । वीक्ष्य विस्मिताश्चैव भवन्ति । दृष्ट्वा विस्मिता भवन्ति । विस्मिता एव सन्तः वीक्षन्ते च । पश्यामि ॥ २२ ॥

अर्जुनः ।

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥

महति अस्मिन् तव रूपे महान्तोऽनेके बाहवो दृश्यन्ते । बहूनि वक्त्राणि नेत्राणि बहवः उरवः पादाश्च दृश्यन्ते । पादा बाहवश्च २ दीर्घा महनीयाश्च वर्तन्ते । बहूनि उदराणि पश्यामि । पश्यामि चात्र बह्वीर्दंष्ट्राः ताभिरिदं रूपं भयं जनयति । एतादृशं रूपमिदं दृष्ट्वा लोकाः त्रयः नितरां भीताः । तदेवोक्तं मया लोकत्रयं प्रव्यथितमिति । द्रष्टुमिच्छामि ते रूपमिति प्रार्थितं त्वया । प्रार्थितेन मया रूपमिदं प्रदर्शितं त्वदनुग्रहाय । लोकाः प्रव्यथिताः अतः उपसंहरति कथमुच्यते । लोका व्यथन्ते चेत् व्यथन्तां त्वदर्थं प्रदर्शितं रूपं त्वमनुभव इति चेत् तथा अहमपि दृष्ट्वेदमतीव बिभेमि । अत उपसंहर इति प्रार्थ्यते ॥ २३ ॥

अर्जुनः ।

नभस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

१ हि शब्दार्थोयं शब्दोऽत्र प्रत्यक्षानुभव । २ऊरु उरु इति च छेदः ।

हे व्याप्तरूप रूपमिदं उकरीत्या यावद् १न्तरिक्षं व्याप्य तिष्ठति ज्वलति च । वर्णाश्चानेके शुक्लनीलपीतादयो वर्तन्तेऽस्मिन् रूपे । आननानि विवृतानि अतो भयानकानि दृश्यन्ते । नेत्राणि सर्वाणि जाज्वल्यमानानि विशालानि च पश्यामि। त्वामेतादृशं वीक्ष्य मे मनः अत्यन्तभीतियुक्तमभूत् । अतो दर्शनेन मनसः परितोषो नोत्पद्यते । मदीयः कृष्ण एव स्वयं किं वा करिष्यति । न किमपि कुर्यात् दर्शयेति नितरामभ्यर्थितो हीदं मे प्रादर्शयत् । किमर्थं भेतव्यमिति विमृशन्नपि भयपरिहारहेतुभूतं धैर्यं नाऽधिगच्छामि । अतोऽहमपि तथा प्रव्यथितं इत्युक्तं मया । २ जानास्येव त्वमिमां मे मनोव्यथामन्तर्यामी ॥ २४ ॥

कृष्णः ।

वाहूदरादिदर्शने भीतः स्यात् पश्य मे मुखानि ।

अर्जुनः ।

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥ २५ ॥

मुखानि दृष्ट्वैव ममान्तरात्मा प्रव्यथितो धृतिं न विन्दन्ति । मुखानि दंष्ट्राभिः भीषणानि वर्तन्ते । प्रलयकालाग्निवत् नितरां ज्वलन्ति च । पुरस्तात् पश्य । दक्षिणतः पश्येति चेत् इयं प्राची इयं प्रतीची इयं दक्षिणा इयमुत्तरा इति इदानीं दिग्भेद ३ ज्ञानं मे नास्ति । दुर्दर्शतेजोदर्शनेन भीत्या च दिग्भ्रमो मेऽद्य सञ्जातः। सति चैवं कथं मम सुखं भवेत् । नैव । त्वं देवानामीशोऽसि सकलजगदाश्रयोऽसि । तथेदानीमेतद्रूपदर्शनान्निरचिनवम् । अतः प्रसीद । परया कृपया त्वमिदमुपसंहर ॥ २५ ॥

कृष्णः ।

पश्यादित्यानित्यादिना मया द्रष्टव्यत्वेनोक्तमखिलं दृष्टं त्वया । जयपराजयादिक

१ रा । नभःशब्देनात्र परमव्योम गृह्यते । तच्च परमं पदं । सर्वाश्रयतया परमपदवर्तीत्यर्थः । प्राकृतनभस्पर्शस्य पूर्वमुक्तत्वात् । शां । शङ्क । नभ इव सर्वस्पृशम् ।
२ हि शब्दार्थोऽयम् ।
३ यद्यपि आदित्यतेजसा दिशो ज्ञातुं शक्यन्ते । तथाऽपि प्रबलेन दिव्यरूपतेजसा आदित्यतेजसोऽभिभवात् न तेन तज्ज्ञानं जायते इति भावः ।

त्वया दिदृक्षितं अहं विदित्वा यच्चान्यत् द्रष्टुमिच्छसि तदपि पश्येत्यवदम् । तदत्र रूपे न दृष्टं त्वया । अदृष्ट्वा तदुपसंहरेति कथं ब्रवीषि । अवश्यदिदृक्षितं हि तव तत् । अतः पश्यात्र तदवधानेन ।

अर्जुनः ।

१अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥

वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

हे देव पश्यामीदं परमाद्भुतं अमी दुर्योधनादयः सर्वे त्वां २ विशन्ति राजसमूहैःसहैव तव मुखानि विशन्ति । विशेयुरन्ये भीष्मादयो महान्तो न विशेयुरिति चेत् भीष्मः द्रोणः तथा अतिरथाख्यस्य सूतस्य पुत्रतामुपगतः कर्णोऽसौ अस्माकं सम्बन्धिनो ये धृष्टद्युम्नादयः योधेषु मुख्यैस्तैरपि सह ते वक्त्राणि विशन्ति । एते तव वक्त्राणि विशन्तो मया दृश्यन्ते । अत एते सर्वेऽपि मरिष्यन्तीति निश्चीयते । वक्त्राणि विशतां मध्ये केचित् त्वदीयदन्तमध्येषु संश्लिष्टा दृश्यन्ते । तेषां शिरांसि चूर्णितानि शीर्णघटवत् शतशः सूक्ष्मरेखोपेतानि पश्यामि । एतेनैते शीघ्रं मरिष्यन्तीति सूच्यते । स्वस्वस्थानेषु युद्धसन्नद्धास्तिष्ठन्ति दुर्योधनादयः भीष्मादयश्च विविधविचित्रोष्णीषालंकृतशिरसो दृश्यन्ते । सति चैवं वक्त्राणि विशन्ति । दशनान्तरेषु विलग्ना दृश्यन्ते । तदीयशिरांसि चूर्णितानि दृश्यन्त इति कथमुच्यते । किमियं भ्रान्तिः उत स्वप्नः किं वा ममेयं माया उतेन्द्रजालं ब्रूहीति चेत् । नेयं मे भ्रान्तिः, नापि स्वप्नः, न तवेयं माया, नापीन्द्रजालं किन्तु सर्वमिदं सत्यम् । कथमियं घटत इति चेत् । एवं तत्तत्स्थानस्थितानेव दुर्योधनादीन् इमे मरिष्यन्तीति प्रदर्शनार्थं विश्वरूपो भवान् मुखानि तत्तदवस्थानदेशपर्यन्तं प्रसार्य ग्रसते । तदा ते विशन्त इव दृश्यन्ते । विशतां मध्ये कांश्चिदन्तःप्रवेशमनापादयन् दन्तसन्धिषु संश्लिष्य लम्बमानान् करोषि तदवस्थानां तेषां मूर्धसु तीक्ष्णाग्रैर्दशनैर्विलिखसि । तेन तदीयमूर्धसु बहवः सूक्ष्मरेखाः

---

रा १ अमी सर्वे धृतराष्ट्रस्य पुत्राः सर्वैः सहैवावनिपालसंघैः । इति पाठः ।
२ विशन्तीति शेषः । उत्तरश्लोकस्थं वा ।

संपद्यन्ते । रेखासु तासु रक्तिमाऽपि दृश्यते । तैः किमपीदं न विज्ञायते । दिव्यचक्षुर्विरहात् । दन्तविलेखनजनितव्यथाऽपि न कार्यव्यापृतानां तेषां बुद्धिमारोहति । तथैव हि लोके कण्टकविलेखनादावनुभवः । त्वद्दत्तदिव्यचक्षुःप्रभावादिदमखिलं मया सम्यक् दृश्यते । नात्र संशयो मम । अन्यैरदृष्टा पुरूरवसो राज्ञो जरा आभ्यन्तरा दृष्टा । अन्यैरज्ञायमानं सदनं सङ्कतेष्टिकासन्धिबन्धशैथिल्यादिकं रत्नगतगुणागुणरेखादिकं च परीक्षकैरभ्यासेन प्रदर्शकदर्पणमहिम्ना च ज्ञायते हि लोके । तथेदमपीति सत्यमेवेदम् । परमाद्भुतमिदं दृश्यते ॥ २६ ॥ २७ ॥ १

अर्जुनः ।

> यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।
> तथा तवामी नरलोकवीराः विशन्ति वक्त्राण्य २ भिविज्वलन्ति ॥ २८ ॥

नदीनां ३ वेगवन्ति जलानि प्रवाहाः अभिमुखाः संतः यथा समुद्रं प्रवेष्टुं समुद्रं प्रत्येव द्रवंति । वेगेन गच्छंति । गत्वा प्रविशंति । हे देव अमी मनुष्यलोकेऽस्मिन् शूरत्वेन प्रसिद्धाः अभितः विशेषेण ज्वलंति । तव मुखानि प्रतिवेगेन गत्वा विशंति । त्वया अतितीव्रं ग्रस्यमानत्वात् तेषां अतिजवजलनदीप्रवाहवद्तिवेगेन गत्वा तव मुखानि विशन्त इव दृश्यन्ते । अद्भुतमिदम् ॥ २८ ॥

कृष्णः ।

किं पार्थ नदीजलानीव मां प्रविशन्तीमे । किं नद्यः पतिं सागरमिव पतिं मां सुखाय प्रविशन्ति । किं मयि प्रविष्टानां एषां समुद्रं प्रविष्टानां नदीनामिव न नाशः । किं नद्यः सागरेणेव मया इमे एकीभवन्ति । किं नदीनामिव मयि प्रवेशादेषां मन्नामरूपभाक्त्वं संपद्यते । कथमिदम् ।

---

१ रा एतदनन्तरं, 'नानारूपैः पुरुषैर्बध्यमानाः...... नापि बलस्य नर्भः' इति चतुरः श्लोकान् केचित् पठन्ति । एवमन्यत्रापि कांश्चित् श्लोकान् एते श्लोकाः सन्ति न वा इति देव एव जानाति । गीताशास्त्रस्य श्लोकसंख्या न व्यासादिभिरुक्ता अर्वाचीनास्त्वविश्वसनीयाः । एवमन्यत्रापि ।

२ अभितो ज्वलन्तीति पाठान्तरम् । अभितः सर्वतः । ३ वेगः एषामस्तीति वेगाः वेगवंतः पदार्थाः । अम्बुरूपाश्च ते वेगाश्च अम्बुवेगाः ।

**अर्जुनः ।**

यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

**हे देव यथा नितरां ज्वलन्तं अग्निं महता वेगेन विशन्तः शलभा नाम दीपे पतित्वा नश्यन्तः कीटविशेषाः स्वनाशायैव विशन्ति । पतनमात्रेण नश्यन्ति च । तथैव इमे तव वक्त्राणि विशन्त इव दृश्यमानाः । त्वया ग्रस्यमाना जना अपि वेगेन महता विनाशायैव तव वक्त्राणि विशन्ति । पार्थ शलभाः पतित्वा यथा दीपं निर्वापयन्ति । किं तथेमे मामिति चेत् । नितरां जाज्वल्यमानं ज्वलनं विशन्तो हि शलभाः दृष्टान्तीकृताः । न ते तं निर्वापयन्ति । किन्तु स्वयं नश्यन्ति । तथेमे लोकास्त्वां प्रविश्य नश्यन्ति । पूर्वोक्तदृष्टान्तस्तु महता वेगेन प्रवेशमात्रे । प्रविष्टानां तेषां नामरूपहानिविषये वा ॥ २९ ॥**

**अर्जुनः ।**

लेलिह्यसे ग्रसमानः समन्तात् लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥

**ज्वलद्भिर्मुखैः सर्वान् लोकान् सर्वतो ग्रसमानः बहिर्निर्गच्छतो जिह्वाग्रेण निजोष्ठपुटसृक्प्रान्तविलेहनं कुर्वन् पुनर्मुखान्तः प्रवेशयसि । भुञ्जानः सिक्थानीव $ । हे विष्णो उग्राः तव प्रभाः स्वप्रकाशैः कृत्स्नं जगद्व्याप्य तत्र तत्र स्थितान् नितरां तापयन्ति । पश्यामीदमद्भुतम् । स्वतेजसा विश्वमिदं तपन्तमित्युक्तं पूर्वं मया । न तेजसैव किन्तु तेजसो विस्फुरणैरपीतीदानीमुच्यते । विनाऽस्मान् पंच भ्रातॄन् सर्वे मरिष्यन्तीति सूचितं सर्वान् ग्रसमानेन त्वया । एतेन अस्माकं जयो निश्चितः । इदमेव दिदृक्षितं मया । अनुज्ञातं च त्वया 'यच्चान्यत् द्रष्टुमिच्छसी'ति ३० ॥**

**अर्जुनः ।**

आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥

---

**$ एतेन ये निर्गताः पुनरन्तःप्रवेश्यन्ते ते युद्धे कथंचिन्मुक्ताः पलायिताः पुनरन्विष्य संह्रियन्त इति सूच्यते ।**

मानुषं सौम्यं रूपं दर्शयन् त्वं कृष्णोऽसि । परमाद्भुतमिदं १ महोग्रं रूपं दर्शयन् त्वं कोऽसि । एतद्रूपधारिणस्तव नाम किं वद मह्यम् । ईश्वरासाधारणरूपदर्शनादादिभूतमीश्वरमहं त्वां मन्ये । ईदृग्रूपधरस्य तव नाम किं ब्रूहि । अत्र युद्धरङ्गे त्वया चिकीर्षितो व्यापारः कः । प्रदर्शितः भीष्मादिग्रसनरूपव्यापारो ज्ञायत एव । तथाऽपि कथं केषां किमर्थमिति २ नैव सम्यक् जानामि । ३ अतो ब्रूहि । किमेवमयं निश्शङ्कं पृच्छतीति कोपं मा कार्षीः । नमस्करोमि त्वाम् । प्रसादं कुरु परमया कृपया । नाम प्रवृत्तिं चोक्त्वा रूपमिदमुपसंहृत्य तदेव सौम्यं रूपं दर्शय । एतद्रूपदर्शनेन देवोत्तमं त्वां निरचिनवम् । धन्योऽस्मि ॥ ३१ ॥

सञ्जयः ।

एवं पृच्छन्तं नमस्कुर्वन्तं प्रार्थयन्तं तमर्जुनं दृष्ट्वा समीचीनोऽयं समयस्तामिमं वशमानेतुमित्यालोच्य नामान्तरं व्यापारान्तरं चानभिधाय भयावहं नाम चिकीर्षितव्यापारं चाह भगवान् ।

श्रीभगवानुवाच ।

कृष्णः ।

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वा न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

रूपेणानेन लोकनाशं करोम्यहम् । सर्वसंहरणात्कालनामाऽहम् । लोकनाशनरूपमहाकार्यसाधनार्थमेव ईदृशीमवयवैर्वृद्धिमुपगतः । इह स्थितान् लोकान् संहर्तुं इहाहं प्रवृत्तः । किमत्रत्यानस्मानपि भ्रातॄन् सञ्जिहीर्षसीति चेत् । त्वां ४ त्वद्भ्रातॄंश्च विना प्रतिपक्षतयाऽवस्थितेष्वनीकेषु बह्वक्षौहिणीमितेषु उभयेषु सैन्येषु ये योद्धारो भीष्मादयो वर्तन्ते धृष्टद्युम्नादयश्च ते सर्वे न भविष्यन्ति नंक्ष्यन्ति । दुर्योधनादीनां लोकानामायुरवसानं ५ गणयन्नहं लोकक्षयकृत् । तादृशे मयि महामृत्यौ समुपस्थिते केऽनुजीविष्यन्ति । तत्त ६ द्वधोपायं ज्ञात्वा वधबंधनच्छेदनविद्रावणादिभिः सर्वानहं संहरिष्यामि । यद्येवं तर्हि मामनभिमते युद्धकार्ये कुत-

---

१ उग्रं रूपं यस्य सः । शं । उग्रस्य प्रळयकालरुद्रस्य रूपमिव रूपं यस्य स उग्ररूपः । २ हिशब्द एवार्थे । ३ हिशब्दो हेतौ । ४ वाऽपि ऋते ।
५ रा । कल संख्याने । ६ कलबन्धने छेदने संहरणे विद्रावणे क्षामे कलकामेधनुः ।

चोदयसि । उच्यते हि युद्धं कुर्विति त्वयाऽसकृत् 'तस्माद्युध्यस्व भारत ।' 'युध्यस्व विगतज्वरः' 'उत्तिष्ठोत्तिष्ठ भारत' 'युध्यच मय्यर्पितमनोबुद्धिः' इत्यादि वदता । त्वमीदृशश्चेत् त्वमेव सर्वान् संहर । कुतो मे साहाय्यमिच्छसीति चेत् । मनागपि मा भूद्भवतो व्यापारः । अहमेव संहरिष्यामि सर्वान् । येऽत्र वर्तन्ते ते सर्वे विनैव १ भवतो व्यापारलेशं मरिष्यन्ति । पश्य मे सामर्थ्यम् । स्वयं संहर्तुमशक्तो मामयं प्रार्थयतीति मा मंस्थाः । युद्धं तव श्रेय इति त्वं प्रेर्यसे ॥ ३२ ॥

अर्जुनः ।

यदि मामृतेऽपि न भविष्यन्ति सर्वे तर्हि किमर्थं मां युद्धे नियोजयसि । तवानेन श्रेयः स्यादिति नियोजयामि युद्धे त्वामिति चेत् । विनाऽपि युद्धं त्वदनुग्रहात् स्यादेव ममान्यतः श्रेयः । कीर्त्यर्थमिति चेत् । एतेषु त्वया हन्यमानेषु कथं मम कीर्तिः स्यात् । राज्यार्थमिति चेत् । त्वया युद्धे पराजितानां राज्यं त्वदीयं हि स्यात् । केन न्यायेन राज्यं मदीयं स्यात् । चिराय जीविष्यत इमान् कथं संहरेयमहम् । कथं वा संहर्तुं शक्यम् । ब्रूहि ।

कृष्णः ।

तस्मात् त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैव ते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

युद्धादुपरतेऽपि त्वयि महामृत्युना मयैव यस्मादेते संहरिष्यन्ते अतः न योत्स्ये इति युद्धादुपरतिर्व्यर्था । तस्मात् त्वं युद्धाय सन्नद्धो भव । पार्थेन भीष्मादयो देवैरप्यजय्या युद्धे जिता इति कीर्तिं प्राप्नुहि । शत्रून् जेष्यसि । जित्वा च राज्यं प्राप्स्यसि । समृद्धियुक्तं तद्राज्यं त्वमेवानुभव । कथं जययशोराज्यादिकं मम घटत इति चेत् युद्धारम्भात् पूर्वमेव युद्धेऽसान् त्वत्प्रवृत्तेः पूर्वमेव निहताः हन्तव्यत्वेन सङ्कल्पिताः कटाक्षवीक्षणादेव तेजोबलपौरुषादिकमाकृष्य निःसारतां नायित्वा निहतप्रायाः । शीर्णपर्णवत् पतनोन्मुखीकृताः । हे पार्थ त्वं तु निमित्तमात्रं भव । कर्ताऽहं । त्वं तु शरवदुपकरणमात्रं भव । 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते' इति ह्युक्तं मया । एतेषु मया हतेष्वपि तव तत्र निमित्तमात्रत्वात्

१ त्वा ऋतेऽपि ।

तव जययशोराज्यादिकं घटत एव । मया हन्तव्यत्वेन सङ्कल्पितत्वादिमे चिरं न जीविष्यन्ति मरिष्यन्त्येव । पतनोन्मुखीकृतत्वात् वायुयत्तत्र निमित्तीभूय पातनं च सुकरम् । संहर्त्रा पुंसा शर इव मया त्वमुपकरणीकृतः । तव निमित्त-१ त्वमपि मदायत्तम् । अतोऽहं हनिष्यामीति मतिस्ते मा भूत् । निमित्तमात्रं हि त्वं न कर्ता । अतो निःशङ्कमेव युद्धयस्व । कर्तुस्तत्रोपकरणीभवितुमर्हो नाह-मिति चेत् सव्यसाची हि भवान् । वामेनापि हस्तेन शरान् मोक्तुं त्वं कृता-भ्यासोऽसि । करद्वयेन योद्धुं समर्थत्वात् त्वं मयोपकरणीकृतः । अतो निःशङ्कमेव युद्धे प्रवृत्तो भव ॥ ३३ ॥

अर्जुनः ।

मयैवैते निहताः पूर्वमेवेति कथं । जित्वा शत्रून् इत्यविशेषेण सर्वशत्रुजयोक्तिः कथं। द्रोणस्य ब्राह्मणत्वात् प्रवृद्धब्रह्मवर्चसवत्त्वेन धनुर्विद्याचार्यत्वेन च । भीष्मस्य ब्रह्म-चर्यव्रतासिधारासंचरणदक्षतया महानुभावत्वेन पितुः शन्तनोः सकाशाल्लब्धस्व-च्छन्दमरणवरत्वेन शस्त्रास्त्रसम्पत्सम्पन्नत्वेन द्वन्द्वयुद्धे भगवता परशुरामेणाप्य-जितत्वेन च जयद्रथस्य शिवाल्लब्धपाण्डवजयवरत्वेन उग्रं तपस्तप्त्वा यः त्वत्पु-त्रस्य शिरो भूमौ पातयति सद्यस्तस्य शिरः पतिष्यति भूमाविति लब्धवरस्य वृद्धक्षत्रस्य पुत्रत्वेन च कर्णस्य शस्त्रविद्यापारीणत्वेन परशुरामाल्लब्धविद्यावैशा-रद्यत्वेन महेन्द्रदत्तया एकपुरुषव्यापादिन्या अमोघया मोघीकर्तुमशक्यया शक्त्या सम्पन्नत्वेन च तथा अन्येषामपि योधवीराणां तैस्तैः जेतुमशक्यत्वात् । ब्रूहि ।

कृष्णः ।

> द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्यानपि १योधवीरान् ।
> मया हतांस्त्वं जहि मा व्यथिष्ठा युद्धयस्व जेताऽसि रणे सपत्नान् ॥ ३४ ॥

द्रोणं च भीष्मं च जयद्रथं च कर्णं च तथा अन्यान् योधवीरांश्च प्रति त्वं कथमेतं जेतुं शक्या इति मा शङ्किष्ठाः । भयेन मनःपीडां मा गमः । त्वया अजय्यत्वेन शङ्क्यमाना अपि भीष्मादयो महामृत्युना मया संह्रियन्ते । पश्य मे सामर्थ्यम् तत्तदुपायविरचनेन पतनोन्मुखीकृताश्च । त्वं तत्र निमित्तमात्रं भूत्वा मृतप्रायान् तान् निःशङ्कं संहर । रणे तानन्यांश्च शत्रून् अनायासेन जेष्यसि । तव त्वज्ञा-

१ रा । योधमुख्यानिति पाठः ।

तृणां च ये शत्रवः शत्रुपक्षे प्रविष्टाश्च ते सर्वेऽपि मया संह्रियन्ते । तत्र मा शङ्कां कार्षीः । अतो निश्शङ्कं युध्यस्व ॥ ३४ ॥

धृतराष्ट्रः ।

श्रुत्वेदं भगवतो वचनमर्जुनः किमकरोत् ब्रूहि मे सञ्जय ।

सञ्जय उवाच ।

एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

'प्रणम्य शिरसा देवं कृताञ्जलिरभाषत' इत्युक्तरीत्या १ नमस्कृत्वा कृताञ्जलिः सन् भयेन कम्पमानः सन् 'पश्यामि देवांस्तव देव देहे' इत्यादि 'न हि प्रजानामि तव प्रवृत्तिम्' इत्यन्तं वचनजातमुक्तवान् २ प्रशस्तकिरीटवान् देवैर्दत्तदिव्यकिरीटः अर्जुनः 'आख्याहि मे को भवानि'त्यादिना प्रार्थितस्य स्वनामप्रवृत्त्यादिकं कथयतो भगवतो वचनमुक्तरूपं श्रुत्वा महोग्ररूपदर्शनेन 'लोकान् समाहर्तुमिह प्रवृत्तः' इत्यादिवचनश्रवणेन च 'सखेति मत्वा प्रसभं यदुक्तं' इत्यादिना वक्ष्यमाणस्वापराधानुसन्धानेन च नितरां भीतो भगवन्तं पुनरपि प्रणम्य कृताञ्जलिः सन् वेपमानः सन् ३ गद्गदयुक्तकण्ठध्वनि यथा तथा पुनरपि वचनमाह । अहो तेजस्तस्य रूपस्य । अहो गाम्भीर्यं तस्य वचनस्य । यद्दर्शनात् यच्छ्रवणाच्च महाधीरोऽपि भगवतो लब्धदिव्यचक्षुरपि पार्थः ईदृगवस्थोऽभूत् । वक्ष्यमाणं पार्थवचनं सम्यगवधारय ॥ ३५ ॥

अर्जुन उवाच ।

स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६ ॥

१ रा । श्रुत्वा नमस्कृत्वा भूय एव प्रणम्य कृताञ्जलिः वेपमान आहेत्यन्वयः । २ रा । मत्वर्थेन इनिना पार्थकिरीटस्य श्रीभगवच्चरणारविन्दवन्दनेन कृतार्थता उच्यते । अत्र 'भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्द' मित्यादिकमनुसन्धेयम् । ३ भयेन हर्षेण च नेत्रयोरश्रूद्गमे श्लेष्मणावरुद्धकण्ठस्य वाचोऽपाटवं ध्वनेर्मन्दत्वं सकम्पत्वं च गद्गदः ।

हे देव त्वद्गुणकर्मनाम्नां सम्यक् कीर्तनेन श्रवणेन च जगतः अतिशयितः सन्तोषो भवति । तेन तस्य त्वयि अनुरागशब्दितातिशयितप्रीतिरूपा भक्तिश्चोत्पद्यते । तव प्रकीर्त्या रक्षांसि भीतानि दिशः प्रति द्रवन्ति । अन्येन त्वन्नामनि गुणकर्मादौ च कीर्तिते श्रुत्वा रक्षांसि पलायन्ते । तपः सिद्धानां संघाः कीर्तयन्तः शृण्वन्तश्च भक्तिप्रकर्षेण नमस्कुर्वन्ति । [1] न एतत् न हि कृष्णस्यैवान्यस्य कस्यापि प्रकीर्त्या जगत् हृष्यति अनुरज्यते च रक्षांसि द्रवन्ति । सिद्धा नमस्यन्ति च इति ममात्र शङ्काऽवर्तत । सेदानीमपगता । यज्जगद्धृष्यति तत् [1] स्थाने [2] युक्तम् । यदनुरज्यते तच्च स्थाने । यद्रक्षांसि द्रवन्ति तदपि स्थाने । यत् सिद्धसंघा नमस्यन्ति तच्च स्थाने । युक्तमेवेदं सर्वमीदृशे देवदेवे त्वयि । [3] युद्धदिदृक्षयाऽगतं देवगन्धर्वयक्षविद्याधरसिद्धसाध्यकिन्नरकिंपुरुषाद्यात्मकं उदासीनं जगत् त्वत्प्रसादात् त्वद्दत्तदिव्यदृष्ट्या त्वामवलोक्य त्वद्विषयं स्तुतिरूपं कीर्तनं करोति । तेन हृष्यति अनुरज्यते च । प्रतिकूलानि रक्षांसि त्वामवलोक्य द्रवन्ति । अनुकूलाः तपसा महतीं सिद्धिमाताः देवर्षिसिद्धसंघाः त्वामवलोक्य नमस्कुर्वन्ति तदेतत् सर्वं युक्तम् ।

अयं श्लोकः मन्त्रशास्त्रे रक्षोघ्नमन्त्रत्वेन विनियुक्तः । नारायणाष्टाक्षरसुदर्शनमन्त्राभ्यां सम्पुटितोऽयं मन्त्रः सर्वसिद्धिप्रदः । सर्वानिष्टनिवर्तकश्च । अहो अस्य महिमा । [4] कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः । मयैवैते निहताः पूर्वमेव इत्युक्तया त्वदीयया वाचा जगत् साधु लोकः हर्षं प्राप्नोति । अनुरज्यते च । भुवो भारायमाणसमस्तलोकसंहरणवचनेन साधूनां हर्षोऽनुरागश्च युक्त एव । दुष्टान् संहर्तुं प्रवृत्तोऽयमस्मानपि दुष्टान् संहरेदिति भिया रक्षांसि द्रवन्ति । मारके प्रत्यासन्ने दुष्टानां भिया पलायनं युक्तमेव । सिद्धाः नमस्कुर्वन्ति । महतां सिद्धानां स्वामिन् तथैवाचिरेण कर्तव्यमिति प्रणामपूर्वकप्रार्थनं युक्तमेव । अहो ते वचनप्रौढिमा ॥ ३६ ॥

कृष्णः ।

सिद्धाः महान्तः । ते कुतो मां नमस्कुर्वन्ति ।

---

१ स्थाने इत्यव्ययम् । प्रकीर्त्या स्थाने इत्यनयोः सर्वत्र सम्बन्धः । २ शां । प्रहृष्यति हर्षविषयो भवान् स्थाने युक्तः । एवमग्रेऽपि । तव हर्षानुरागभयनमस्कारादिविषयत्वं युक्तमित्यर्थः । ३ रा । ४ शांक । •

अर्जुनः ।

कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥

व्याप्तरूप परमोदारस्वभाव हे परमात्मन् ब्रह्मदेवादपि नितरां श्रेष्ठाय तस्यापि जनकाय यस्मात् पूर्वो नास्ति स १ आदिः तादृशाय तुभ्यं कस्माद्वा हेतोः नमस्कारं न कुर्युः कुर्युरेव । देशतः कालतः २ गुणतः ३ वस्तुतो वा परिच्छेदरहितस्त्वं । त्वं सर्वदेशव्याप्तः सर्वकालावस्थायी सर्वगुणपरिपूर्णः सर्ववस्त्वात्मकः । अतोऽनन्तः ४ त्वं । जगति त्वं निवससि जगत् त्वदन्तर्वासयसि । सर्वाधारः सर्वान्तर्यामी च भवान् । ५ सत् भावः व्यक्तं वा । असत् अभावः अव्यक्तं वा । भावाभावात्मकं व्यक्ताव्यक्तात्मकं च यज्जगत् तत् त्वमेव । तस्य स्वरूपस्थितिप्रवृत्तिनियामकोऽसि । ताभ्यां सदसद्भ्यां परं उत्तमं भिन्नं च यत्परमं अक्षरं ब्रह्म तत् त्वमेव । ६ उक्तं हि मया त्वमक्षरं परम.मिति । अक्षरं ७ जीवात्मतत्त्वं यत् तत् त्वमेव । सत् नामरूपवत्तया कार्यावस्था प्रकृतिः । असत् तदनर्हतया कारणावस्था प्रकृतिः कार्यकारणात्मनाऽवस्थितं प्रकृतितत्वं यत् तदपि त्वमेव । तत्परं ताभ्यां प्रकृतितत्संसृष्टजीवाभ्यां परं अन्यत् उत्तमं मुक्तात्मतत्वं यत् तदपि त्वमेव । सर्वशरीरकोऽसि त्वम् । ईदृशाय तुभ्यं ते कुतो न नमस्कुर्युः । ८ नव ९ दश वा हेतवो नमस्काराकरणे । नैकोऽपि हेतुरस्ति । अतो यन्नमस्यन्ति तद्युक्तमेव ॥ ३७ ॥

अर्जुनः ।

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।
वेत्ताऽसि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

आदिरसि जगतः देवोऽसि सृष्ट्यादिव्यापारैः क्रीडसि च त्वं पुरिशयनात् पूर्णषड्गुणत्वाच्च पुरुषोऽसि । पुराणः अनादिरसि । पुराणः पुरुषोऽसि

१ आदिश्चासौ कर्ता च आदिकर्ता तस्मै । आद्यं कर्त्रे च । २ म ।
३ शं । रा । ४ अनन्तदेवेशेति भिन्नं पदं । अनन्तदेवेश इत्येकं पदं वा । अनेकेषां देवानां नियन्ताऽसि । ५ म । शं । ६ भयहर्षविस्मयाद्याविष्टत्वात् भगवन्माहिमोक्तौ महातात्पर्यवत्त्वाच्च पुनरुक्तिर्न दोषाय । एवमग्रेऽपि । ७ रा । ८ शं । म । ९ रा ।

त्वं अस्य विश्वस्य महाप्रलये स्वोदरे निवेश्य रक्षणान्महाधारोऽसि । सर्वस्यार्थजातस्य वेदिताऽसि सर्वज्ञोऽसि । यो यो वेदिता जगति ससर्वोऽपि त्वमेवासि यच्च वेद्यं तत् त्वमसि । १ वेद्यं यद्यत् तत्सर्वं ज्ञाताऽसि ।

परमं तेजोऽसि परमप्राप्यं यत् मोक्षस्थानं वैष्णवं पदं तदपि त्वमेवासि । त्वमनन्तरूपोऽसि । त्वया विश्वं व्याप्तं त्वमन्तर्बहिश्च व्याप्तोऽसि । यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थित इति श्रुतिः । २ आदिदेवः पुराणः पुरुषः सृष्ट्यादिकर्ता मायोपाधिकः परमेश्वरः त्वमेव । त्वमस्य विश्वस्य परो निधानं घटादीनां मृदिव महदादीनां विकाराणामुपादानभूता माया या साऽपि त्वमेव । वेदिता प्रत्यगात्मा यः स च त्वमेव । वेद्यं घटपटादिदृश्यजातं यत् तदपि त्वमेव । मायातत्कार्यलेशसम्बन्धशून्यं जीवेशजगदाभासकल्पनाधिष्ठानं नित्यशुद्धबुद्धमुक्तस्वभावं नित्यानन्दैकरसमद्वितीयं यत् परं ज्योतिर्ब्रह्म तदपि त्वमेव । त्वयेदं विश्वमग्निनाऽयःपिण्डमिव व्याप्तम् । अतस्त्वन्मात्रमेव । अतोऽद्वितीयस्त्वम् । एतैः षड्भिः सप्तभिरष्टाभिर्वा हेतुभिस्त्वं नमस्कार्योऽसि । अतो यन्नमस्यन्ति तद्युक्तमेव ॥ ३८ ॥

अर्जुनः ।

वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं ३प्रपितामहश्च ।

त्वं वायुः त्वं यमः त्वमग्निः त्वं वरुणः त्वं चन्द्रः त्वमेव चतुर्वदनो ब्रह्मा त्वमेव पितामहस्य तस्य ब्रह्मणः पिता विष्णुश्च । त्वं साक्षाद्विष्णुः । वाय्वादीनां स्वरूपस्थितिप्रवृत्तिनियामकश्च । अतस्त्वमुक्तहेतुभिः सर्वैः सर्वदा सर्वथा नमस्कार्योऽसि । अतो यन्नमस्यन्ति तद्युक्तमेव ॥ ३८ ॥

सञ्जयः ।

दिव्याभरणविभूषितं दिव्यायुधोपेतं दिव्यगन्धानुलेपनं महाद्भुतं भगवतो रूपं दृष्ट्वा किं कुर्यामहमल्पीयानस्य महतो महाद्भुतस्य रूपस्य । निःस्वो भक्त्या क्षमापयेदिति न्यायेन भक्त्यैवायं भगवान् तोषणीयः । इति मत्वा असकृन्नमनेन तदुक्त्या च स्वीयां भक्तिं प्रदर्शयति पार्थः ।

---

१ वेद्यं वेत्ताऽसि इत्यन्वयः । २ शंक रा । ३ पितामहस्त्वं प्रपितामहश्चेति पाठः । एतदनन्तरं अनादिमान प्रतिम + चिन्त्यकर्मा इति श्लोकः कुत्रचित् कोशे दृश्यते ।

**अर्जुनः ।**

नमो नमस्ते[1]ऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।

**तुभ्यं नमः तुभ्यं सहस्रकृत्वः नमः अस्तु । तुभ्यं पुनश्च नमः । तुभ्यं भूयोऽपि नमोऽस्तु । तुभ्यं पूर्वस्यां दिशि नमः तुभ्यं पृष्ठतः पश्चिमायां दिशि नमः २ अस्तु । हे सर्वव्यापिन् देवदेव ३ दक्षिणस्यां दिशि ते नमः । उत्तरस्यां दिशि ते नमः । ऊर्ध्वं नमः अधः नमोऽस्तु । सर्वत्र नम एवास्तु । न तु प्रकारान्तरेण त्वामहं उपचरितुं शक्तः ॥**

अर्जुनः ।

अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥

वीर्यं शारीरं बलं विक्रमः शस्त्रास्त्रप्रयोगकौशलम् । तव वीर्यं अनन्तं तव विक्रमः अपरिमितः ४ तादृशस्त्वं सर्वं ५ जगत् सं सम्यक् साकल्येन अन्तर्बहिश्च व्याप्य वर्तसे अग्निरयःपिण्डमिव ततो हेतोः त्वं सर्वोऽसि । सर्वरूपोऽसि । यथा ऽग्निरयःपिण्डरूपः तथा । यथा व्याप्तमयःपिण्डमग्निरिति व्यवह्रियते । तथा व्याप्तं जगत् त्वमिति व्यवह्रियते । पुरुष एवेदं सर्वम् । सर्वं खल्विदं ब्रह्म । ब्रह्मैवाहमित्यादौ । ब्रह्मणा इदं व्याप्तमित्यादिरर्थः । ६ सर्वं जगत् सं सम्यक् आत्मत्वेन व्याप्य वर्तसे । ततस्त्वं सर्वोऽसि । तत्तद्वाचकतत्तच्छब्दवाच्योऽसि । शरीरवाचकतत्तच्छब्दवाच्यत्वादात्मनः सर्वेषामात्मभूतस्त्वं शरीरभूततद्वाचकतत्तच्छब्दवाच्योऽसि । सर्वं ब्रह्मणः आत्मभूतस्य शरीरभूतं ब्रह्म सर्वशरीरकत्वेन सर्वशब्दवाच्यं इत्यादिरर्थः । सर्वं ७ जगत् सं एकीभावेन सुवर्णमिव स्वकार्यकटककुण्डलादि शुक्त्यादिकमिव रजतादि कार्यकरणभावसंबन्धेन आध्यासिकसंबन्धेन च व्याप्य वर्तसे ।

१ पृष्ठतश्चेति पाठान्तरम् । २ अस्त्वित्यस्य संबन्धः । पुरस्तादिति छेदः । पुरः स्तात् अस्तु इति वा । ३ पृष्ठतः सर्वतश्च नमोऽस्तु । तन्नमः ते पुरस्तात् सर्वतोमुखत्वात् । गी त । ३ । शं । पुरस्तात् पृष्ठतः सर्वतः स्थिताय तुभ्यं नमः । ४ अनन्तवीर्यश्चासौ अमितविक्रमश्च अनन्तवीर्यामितविक्रमः इत्येकं पदम् । हे अनन्तवीर्य अमितविक्रमः त्वमिति वा । ५ म । ६ रा । अत्र ब्रह्मेति...वाचः । सामान्यबुद्धिजनकोश्च...कण्ठ्यम् । इत्यादिकमनुसन्धेयम् । ७ शं ।

ततस्त्वं सर्वोऽसि । यथा सुवर्णं कटककुण्डलादिसर्वरूपं कटकादि सुवर्णात्मकम् यथा शुक्त्यादिकं रजतादिरूपं रजतादिकं च शुक्त्याद्यात्मकं तथा त्वं सर्वस्वरूपोऽसि सर्वं च त्वदात्मकम्। अतः त्वं वाय्वादिव्यापकः वाय्वादिशरीरकः वाय्वादिस्वरूपः असि । अतो हे सर्व इत्युक्तं मया । तादृशस्येश्वरस्य तव मया किं कर्तुं शक्यम् । अतः पुनः पुनः सहस्रकृत्वः प्रणमामि। क्षन्तव्यम् सकलमपि मदीयमागः । बिभेम्यहं स्मारं स्मारं मदीयं अपराधजातम् ॥ ४० ॥

कृष्णः ।

क्षन्तव्यमाग इत्युक्तं त्वया । किमागः कृतवानसि । पार्थ ब्रूहि ।

अर्जुनः ।

सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वाऽपि ॥ ४१ ॥

१ यच्चापहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।
एकोऽथ वाऽप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

समानवयस्कत्वात् सखा इति मत्वा व्यासनारदाद्युक्तमहामाहिमोपेतः अत एव महनीय इत्यविमृश्य अविमर्शजनितात् प्रमादशब्दितात् अनवधानात् कदाचिद्विमर्शेऽपि स्नेहजनितविस्रंभेणापि वा हे कृष्ण हे यादव हे सखे इति यदुक्तं मया तत् क्षमस्वेति प्रार्थये । २ इदं महाद्भुतं रूपं अयं च पूर्वोक्तः सर्वोऽपि महिमा तव विद्यत इति यद्यहं जानीयां तर्हि नैवं उक्तवान् स्यां ३ रूपमिदं महिमान ४ मिमं वा नाज्ञासिषम् । अतोऽहमेवमुक्तवानस्मि । क्षमस्वेमं मन्तुम् ।

सर्वो हि लोके देवदत्तः यज्ञदत्तः इति नाम्ना आत्रेयः गार्ग्यः इति कुलेन मित्रं शत्रुरिति गुणे न च निर्दिश्यते । सति चैवं हे कृष्ण इति नामोक्तिः हे यादव इति कुलोक्तिः हे सखे इति स्नेहरूपगुणोक्तिश्च कथमपराधः स्यादिति चेत् । यद्यपि नाम्ना कुलेन गुणेन च निर्देशो नापराधः । तथाऽपि महामाहिमयति महति पुरुषे नाम्ना कुलेन संबोधनं हे सखे इति स्नेहाविष्कारपूर्वकसंबोधनं च महानपराध एव भवति । आवहति च कोपम् । द्रोणस्य

१ अवहासार्थमिति पाठान्तरम् । २ शं। इदं विश्वरूपं महिमानं च ।
३ म। इदं विश्वरूपात्मकं माहिमानं । ४ रा। इमामिति पाठः। इमं महिमानम् ।

सखित्वेन निर्देशो हि द्रुपदस्य कोपमुदपादयत् । तथैव चानुभूयते लोके । अत ईदृशमहामहिमवतो भवतो विषये हे कृष्णेत्या(दि)भिरपराध एव । १ अन्वर्थनामत्वकुलोद्धारकत्वाद्यभिप्रायेण नामादिभिर्निर्देशो नामादिभिर्निर्दिश्यमानस्य तोषाय भवति । तथा च स गुण एवं संपद्यते । नाहं तथा कृषिर्भुवा कः शब्दो (?) णश्च निर्वृतिवाचक इत्युक्तनिर्वचनात् पूर्णानन्दात्मकत्वाभिप्रायेण कृष्ण इति यदुकुलोद्धारकत्वाभिप्रायेण यादव इति ईदृशानन्तकल्याणसुगुणगणो भगवान् भवान् मे सखा जातः अहो मे भाग्यातिशयः इत्याभिप्रायेण २ सखे इति च त्वामुक्तवानस्मि । अपि तु साधारणबुद्धया । अतोऽयमपराध एव । अतः क्षमस्वेति प्रार्थ्यते । न केवलमेतावदेव । किं तु त्वामहमेकांते बहूनां समक्षं च ३ परिहासाय विहारादिषु अवाज्ञासिषम् । हे अच्युत ब्रह्मादिभिरपि ज्ञातुमशक्यं त्वां तत् क्षमापयामि । क्षमस्वेति प्रार्थयामि । अपराधिनमप्याश्रितं न च्यावयसि हि त्वं परमया करुणया । ४ ब्रह्मादीनामप्यशक्यं यस्य ते २ महिम्नो वेदनं तस्य ते महिमानमल्पमतिरहं कथं ज्ञातुं शक्नुयाम् । विहारः क्रीडाव्यायामशब्दितः पद्भ्यां संचारश्च । शय्या शयनं तूलिकाद्यास्तरणविशेषश्च । आसनं उपवेशनम् । चतुष्पादिकाद्यासनविशेषश्च । भोजनं त्वदीयं सहोपविश्य पंक्तौ भोजनं च । एषु विषये एकान्ते क्रीडादि कुर्वाणस्त्वमेकान्ते अवमानितः । सखिभिः सह क्रीडादि कुर्वाणस्तेषां ५ समक्षमवमानितः । सर्वं तत् त्वया क्षन्तव्यमिति प्रार्थये भवन्तम् । अथ वा सर्वाधिकस्त्वं विहारादिषु विषये असत्कृतोऽसि इति यच्च तत् तदपि पूर्वोक्तं पश्चादुक्तं चागः त्वं क्षमस्वेति त्वां समक्षं त्वत्पुरतः प्रार्थये ॥ ४१-४२॥

अर्जुनः ।

पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥

१ गी । त । २ सखे इति इत्यनयोः सन्धौ सखे इतीति स्यात् तथाऽपि आर्षत्वात् सन्धिः । म । सखे अति इति छेदः । अति नितरां सखे इतीति लभ्यते । खं ज्ञानं तत्सहितः सखः हे सखे ज्ञानिन् इति सोपहाससंबोधनमिति वा ।
३ अनुचिता च रणप्रकाशनेन लज्जोत्पादनं परिहासः ।
४ अत्र ब्रह्मादयः सुरगणाः...जातेः इत्यादिकमनुसन्धेयम् । ५ शं भा । रा । एकः असत्कृतोऽसीति यत्, तत् असत्करणं अनेकेषां प्रत्यक्षं यथा स्यात् तथाऽपि इति यत् तदुभयं क्षन्तव्यमिति प्रार्थये ।

हे देव त्वं अस्य लोकस्य १ चराणामचराणां च पिताऽसि २ स्थावरजङ्गमात्मकस्य जगतः पिताऽसि । चराचरात्मकस्य ३ अकृतककृतककृतकाकृतकात्मकप्रमाण-प्रमितसकलवस्तुजातस्य त्वं पिताऽसि ।
अस्य चराचरस्य लोकस्य त्वं ४ पूज्यश्चासि । अतिशयेन श्रेष्ठो गुरुरसि महागुरु र्हि त्वम् । गुरूणां ब्रह्मादीनां गुरुत्वात् । त्वं ५ गुरुः गरीय नासि । परमगरीयान-सि । ६ त्वं गुरुरसि गरीयान् पूज्यः परमपूज्योऽसि । त्वं असदृशप्रभावः । त्रैलो-क्ये ७ कृतकादित्रिविधवस्तुजाते । ८ तत्त्वावेदकवेदत्रयेऽपि तथाविधो गीयसे । एतादृशस्य तव कृतकादित्रिविधवस्तुजाते ९ त्रैलोक्ये समः नास्ति सम एव नास्ति। अभ्यधिकः अन्यः कथं स्यात् । यस्य वस्तुनः सदृशमेव नास्ति न हि ततोऽधिक-मुपलभ्येत । १० लोकत्रयेऽपि त्वत्समो नास्ति अधिक कुतः नैव । अतः लोकत्रयं ऽपि अधिको भवानेव न तु भवतोऽन्यः कश्चिदपि ॥ ४३ ॥

अर्जुनः ।

तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥

यस्मात् त्वमस्य लोकस्य पिता गुरुः पूज्यश्चासि । तस्मात् देहं दण्डवत् भूमौ सम्यक् पातयित्वा भयभक्तिप्रकर्षेण नत्वा त्वां क्षमस्वेति प्रार्थनेन प्रसन्नं करोमि । ईश्वरत्वात्तव तव प्रसादो अपेक्षितः । अतः प्रसादये । अतः हे देव त्वं सोढुमर्हसि त्वं ब्रह्मादिभिरपि स्तोतव्योऽसि किं पुनर्मया । ११ प्रियो हि मम त्वम् । प्रियो हि तवाहं प्रियस्त्वं १२ मम प्रियं कर्तुं क्षमस्व । पुत्रस्य विषये पिता सर्वं सहते । सख्युर्विषये सखा सर्वं सहते । तथा त्वं प्रियस्य मम विषये सर्वं सहस्व । पिता पुत्रस्यापराधं अपराधमेव मत्वा मूढो मूर्खोऽयमपराधी हा हन्त कष्टमस्माभिः सोढव्यमस्तीति खिद्यन् कुप्यन् सहते । सखा सख्युरपराधं अपराधमेव मत्वा सखाऽयमेवमासीदिति खिद्यन् कोपमन्तर्निरुन्धन् हितमुपादिशन् सहते । तथा न त्वया ममापराधोऽपराधत्वेन ग्राह्यः किं तु हर्षजनकत्वेन ग्राह्यः । न हि परम-

---

१ लोकस्य चराचरस्य च । २ चराचरात्मकस्य लोकस्य । ३ रा ।
४ म । ५ शं । ६ रा । ७ । रा ८ म । रा । ९ म । रा । १० समो नास्ति अधिकः कुत इत्युक्ते अन्योऽधिको नास्तीति लभ्यते । अतः अन्य इत्यस्य त्वमेवाधिकः न तु त्वत्तोऽन्यः इत्येवार्थो वाच्य इति भावः । ११ म । १२ म । रा ।

प्रीतिपात्रभूतो दयितः १ परमप्रीतिपात्रभूताया दयिताया अपराधं अपराध मन्यते । किं तु हर्षजनकव्यापारं मन्यते । तथा मत्वा सहते सोढ्वा च हृष्यति। तथा प्रियस्त्वं प्रियस्य मम कृते अपराधमपराधममत्वा हर्षजनकव्यापारं मत्वा सहस्व । सोढ्वा च मोदस्व । त्वयि रुष्टे का गतिर्मम। अतः प्रार्थये ॥ ४४ ॥

कृष्णः ।

इदानीं किं मया ते कर्तव्यम् ।

अर्जुनः ।

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥

हे देव उपसंहृत्य इदं रूपं तदेव मानुषं सौम्यं रूपं दर्शय। केनाप्यदृष्टपूर्वस्य महाद्भुतस्य त्वदनुग्रहाय मया प्रदर्शितस्य रूपस्य दर्शनेन न किमुदेतिते परितोषः। किमुपसंहर उपसंहर इत्येवमर्थयसे ब्रूहीति चेत् ।

अन्यैर्मया च पूर्वमदृष्टं दिव्यं रूपं दृष्ट्वा परितुष्टोऽस्मि । नितरामेतन्महाद्भुतदिव्यरूपदर्शनेन मे परितोषः । अथापि चिरं द्रष्टुं न शक्नोमि । कराळदंष्ट्रादिदर्शनजनितभयेन मनो मम नितरां व्याकुलतामुपगतं अत एवं प्रार्थ्यते । ऐश्वरस्यास्य रूपस्य दर्शनेन मम विषये तव कीदृशो निश्चयो जातः इति चेत् । देवानां सर्वेषां त्वमीदृश इति निखिलं जगत् त्वयि वसति जगतस्त्वमाधारोऽसि इति च निश्चयो म माभूत्। अतः प्रसन्नो भूत्वा पूर्वानुभूतपरमसौम्यरूपप्रदर्शनरूपमनुग्रहं कुरु इदमेवाद्य त्वां प्रणम्य याचे ॥ ४५ ॥

कृष्णः ।

तदेव रूपं दर्शयेत्यर्थयसे किं तद्रूपं यत् त्वं द्रष्टुमिच्छासि । किं पूर्वदृष्टं उत तृतीयमन्यत् ।

---

१ परस्परं प्रियत्वोक्त्या अयमर्थः सूच्यते । शं । प्रियायाः अर्हसीति छेदः। आर्षत्वाद्विसर्गलोपेन सन्धिः । इवेति शेषः । प्रिया या अर्हसि इति छेदः। या प्रिया तस्या इवेत्यर्थः । इति च । प्रियः प्रियस्यार्हसीति वक्तव्ये प्रियायार्हसीत्युक्त्या अयमर्थो विवक्षितइति गम्यते ।

अर्जुनः ।

किरीटिनं गदिनं चक्रहस्तं इच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

इदानीं त्वं सहस्रबाहुरसि । विश्वं तव मूर्तौ दृश्यते व्याप्तरूपश्चासि । उपसंहरेदं रूपम् । अहं त्वां किरीटगदाचक्रयुक्तं चतुर्भुजं रथे सारथिस्थाने उपविश्य सारथ्यं कुर्वाणं यथा पूर्वं दृष्टवानस्मि तथैव पुनस्त्वां तेन रूपेण द्रष्टुमिच्छामि । अतः पूर्वदृष्टेन १ चतुर्भुजेन तेनैव रूपेणाविर्भव । सारथ्यं कुर्वाणं सौम्यं मानुषं रूपं दर्शय ॥ ४६ ॥

---

१ म । चतुर्भिः अनिरुद्धप्रद्युम्नसंकर्षणवासुदेवरूपैः सर्वं जगत् भुंक्ते इति चतुर्भुजं तेन । चतुर्भिः विश्वतैजसप्राज्ञतुर्यरूपैरिति च ।

चतुर्भिः ब्राह्मणादिवर्णैः भुज्यते उपजीव्यत इति चतुर्भुजं तेन इति च । चतुरः धर्मादीन् पुरुषार्थान् भोजयतीति चतुर्भुजं तेन इति च । सारथ्यं कुर्वद्रूपं न साधारणं किं तु उक्तरूपमहामाहात्म्यवदिति भावः । अनेककिरीटादियुक्तं अनेकबाह्वादियुक्तं च महद्रूपमुपसंहृत्य एककिरीटादियुक्तं द्विभुजं महामाहात्म्योपेतं सारथ्यं कुर्वद्रूपं दर्शयेत्यर्थः । शं । म । अनेन श्रीकृष्णस्य चतुर्भुजमेव रूपं अर्जुनेन सदा दृष्टमिति निश्चीयते ।

रामा । श्रीकृष्णस्य सूतिकागृहे देवकीवसुदेवाभ्यां प्रदर्शितं रूपं चतुर्भुजम् । 'तमद्भुतं बालकमम्बुजेक्षणम्' इत्युक्तेः । तत्प्रार्थनया 'उपसंहृत्य तद्रूपं बभूव प्राकृतः शिशुः' इत्युक्तरीत्या प्राकृतशिशुसाधारणं यद्रूपं द्विभुजं गृहीतं तदेव गोकुलं गत्वा तत्रावस्थाने यावदक्रूरेण सह मथुरागमनम् । तत आरभ्य कंसवधात् यावत् स्वरूपतिरोधानं चतुर्भुजमेव रूपम् । द्विषतामपि शिशुपालेन चतुर्भुजं रूपं दृष्टम् । उदारपीवरचतुर्बाहुं .... ... शङ्खचक्रगदाधरं ... इत्युक्तेः । किं पुनः परमभागवतेनार्जुनेन ।

म । अन्ये तु सारथ्यं कुर्वत् रूपं भगवतश्चतुर्भुजमित्यस्य न कश्चिदाकर उपलभ्यते । अतः मूलरूप-चतुर्भुज विश्वरूप-सहस्रभुज विश्वाश्रय विश्वान्तर्यामिन् इन प्रभो देव इदानीं अनेककिरीटादियुक्तं त्वां पूर्ववत् एककिरीटादियुक्तं द्विभुजं द्रष्टुमिच्छामि ।

सञ्जयः ।

विश्वरूपोपसंहारपूर्वकं पूर्वदृष्टमानुषरूपप्रदर्शनाय प्रार्थितो भगवान् विश्वरूपमुपसंहृत्य मानुषं रूपं दिदर्शयिषुः तिरोधापनानन्तरं भूयो यदि दिदृक्षा स्यात् तर्हि द्रष्टुं न शक्येत । अतः पुनरेकवारमापादमस्तकमयं पश्यत्विदं रूपमित्यभिसन्धाय सम्यगिदं पश्येति वक्ष्यन् भूयो दिदृक्षोत्पादनाय उपसञ्जिहीर्षितं महद्रूपं प्रशंसन् तस्य स्वप्रसादैकलभ्यत्व साधनान्तरैरलभ्यत्वं चाह ।

कृष्णः ।

श्रीभगवानुवाच ।

१ मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।

तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

हे अर्जुन नेदं साधारणं रूपं अपि तु तेजःप्रचुरं व्याप्तं पूर्णं आदिमध्यान्तरहितं मद्व्यतिरिक्तस्य सर्वस्य प्रपञ्चस्यादिभूतं त्वत्तोऽन्येन केनापि पूर्वं २ एवं न दृष्टं तादृशमिदं ३ परं परमं रूपं परमानुग्रहेण सामर्थ्यातिशयाद्दिव्यं चक्षुर्दत्वा दर्शनयोग्यतामापाद्य मया तुभ्यं प्रदर्शितम् । मत्प्रसादादेव द्रष्टुं शक्यं नान्यैः साधनशतैः । अतःपरमदुर्लभमिदं भाग्यवैभवेन त्वया दृष्टम् ॥ ४७ ॥

तेनैव रूपेणाविर्भव । इत्येव व्याख्यातव्यम् । शिशुपालाय चतुर्भुजरूपप्रदर्शनं तु भयोत्पादनाय वैकुण्ठलोकद्वारपालत्वेन तदनुग्रहाय वा । 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः। अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।' इति हि भगवतोक्तं। कथं चतुर्भुजं विलक्षणं रूपं दृष्ट्वा अवजानीयुः। अतः प्राकृतमानुषराजपुत्रसाधारणं द्विभुजं एककिरीटादियुक्तमेव सारथ्यं कुर्वद्रूपम् । चतुर्भुजेनेत्यत्र तु चतुर्भुज इन इति छेदः इत्येव युक्तमिति भाति। तत्त्वमत्र विचारकुशलैरूह्यम्। असंशयं वेद पार्थसारथिरित्याहुः ।

१ शां० भा० मधु० । विश्वरूपोपसंहारानन्तरं अर्जुनं प्रति भगवत आश्वासनवचनमिदम् । उपसंहारेप्सितो भगवतः विश्वरूपप्रशंसावचनमिदमित्यन्ये ।

२ म । त्वदन्यैरधमैः न दृष्टं कैश्चिदधमैः दृष्टत्वेऽपि त्वद्वन्न दृष्टम् । शां श्री । रा । त्वदित्यस्य त्वादृशादित्यर्थः । त्वादृशात् भक्ततमादन्येन न दृष्टं त्व दृशभक्तैरेव दृष्टम् । शांक । यद्यपि धृतराष्ट्रगेहे श्रीभीष्मादिभ्यः बाल्ये यशोदायै अक्रूराय च विश्वरूपं प्रदर्शितमेव भगवता । तथाऽपि तदवान्तरं रूपं नेदम् । इदं तु तदपेक्षया परं उत्तमं केनाप्यदृष्टं अत उक्तं रूपं परं त्वदन्येन न दृष्टपूर्वमिति । ३ तव परं तवैव दर्शितं नान्यस्य । तर्हि मदन्येन केनापि न दृष्टं वा इति चेत् त्वदन्येन न दृष्टपूर्वम् । तव परं समग्रं दर्शितं अन्येभ्यस्तु किञ्चित्किञ्चिद्दर्शितं अतः त्वदन्येन त्वद्वत् न दृष्टपूर्वमिति च ।

अर्जुनः ।

त्वदन्येन न दृष्टपूर्वं तव दर्शितमित्युक्तम् । अहमिव मदन्योऽपि साधनैरेवंरूपं त्वां द्रष्टुं कुतो न शक्नुयात् । प्रसादाधिक्यात् मह्यं प्रदर्शितत्वेऽपि साधनसामग्रीवशादन्येभ्योऽपि प्रदर्शितं हि स्यात् कथमेतत् ।

कृष्णः ।

न वेदयज्ञाध्ययनैर्न दानैः न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपश्शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

हे पार्थ वेदानामध्ययनैः अक्षरग्रहणात्मकैः विश्वरूपं ममेदं द्रष्टुं न शक्यम् । तथा १ यज्ञभागानां अध्ययनैः अर्थविचारात्मकैश्च न शक्यम् । कन्यादानगोदानभूदानतुलापुरुषदानादिभिः दानैश्च न शक्यम् । वेदोदिताग्निहोत्राग्निष्टोमादिभिः कर्मभिश्च न शक्यम् । उग्रैर्दुष्करैः कृच्छ्रचान्द्रायणादिभिः शरीरशोषणहेतुभिः तपोभिः न द्रष्टुं २ शक्योऽहम् । ३ त्वत्तोऽन्यः भक्तिहीनः भक्तीतरसाधनशतैरपि मामेवंरूपं न शक्नोति द्रष्टुं । ४ मनुष्यलोके नृणां ५ समुदाये त्वमेव मामेवंरूपं दृष्ट्वा कृतार्थोऽभूः । नान्यः कश्चित् त्वादृशाद्भक्तिहीनः । अत उक्तं मया त्वदन्येन न दृष्टपूर्वमिति । अतः कुरुषु त्वमेव श्रेष्ठोऽसि ॥ ४८ ॥

अर्जुनः ।

मा ते व्यथा मा च विमूढभावः दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

---

१ शं । यद्यपि वेदाध्ययनादन्यत् यज्ञाध्ययनं नास्ति यज्ञभागस्यापि वेदत्वात् । तथाऽपि वेदाध्ययनं अक्षरग्रहणात्मकम् । यज्ञाध्ययनं अर्थविचारात्मकमिति विशेषसूचनाय पृथगुपादानम् ।

२ शक्योऽहमिति प्रयोक्तव्ये शक्य अहमित्यार्षम् । सन्ध्यकरणेन गीताशास्त्रस्य शब्दविधिमर्यादातीतत्वं तेन च एतदध्यायप्रतिपाद्यस्य विश्वरूपस्य सर्वलोकातिशायित्वं सूच्यते ।

३ त्वदन्येन न द्रष्टुमहं शक्य इत्यस्य पूर्ववदर्थविशेषो बोध्यः ।

४ मनुष्यलोके इत्यनेन देवलोके ब्रह्मादिभिः कैश्चित् द्रष्टुं शक्योऽहमिति सूच्यते ।

५ देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिण इति वक्ष्यमाणत्वादत्र नृणां समुदाये इत्येवार्थो वाच्य इत्यपरे ।

परमदुर्लभं उग्रं एतादृशं मम रूपं इदं तव सख्या कृष्णेन मया त्वया प्रार्थितेन तुभ्यं प्रदर्शितम्। अतो विमृश्येदं त्वं भयं तेन च मनःपीडां परित्यज। मास्तु ते मनसो व्याकुलीभावः। त्वदीयो ह्यहं कृष्णः। सारथिः किल तवाहम्। अतो भयं भ्रमं संशयं च विहाय सन्तुष्टेन मनसा त्वया १ दिदृक्षितं मया दर्शितं त्वया दृष्टं इदं प्रीतिप्रकर्षेण सम्यगापादमस्तकं पुनः पश्य। ततःपरमुपसंहरामि। तर्हि पूर्वदृष्टं रूपं किं पुनर्दर्शयिष्यसीति चेत्। घोरमिदं रूपं दृष्ट्वा भयमोहादिकं मास्तु। २ पूर्वदृष्टमेव सारथ्यं कुर्वत् रूपं ते पुनर्दर्शयिष्यामि। समनन्तरमेव मया दर्शयिष्यमाणं पूर्वदृष्टमेव रूपं सम्यक्पश्य। दृष्ट्वा स्वस्थचित्तो भव॥ ४९॥

धृतराष्ट्रः।

ततः किमभवत्।

सञ्जयः।

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः।
आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा॥ ५०॥

३ व्याप्तदेहः भगवान् अर्जुनं ४ मया प्रसन्नेन तवार्जुनेदमित्याद्युक्तप्रकारेण ५ कालोऽस्मि लोकक्षयकृत्प्रवृद्ध इत्याद्युक्तप्रकारेण च उक्त्वा पुनः स्वकं रूपं दर्शयामास पूर्वं प्रदर्शितं इदानीमुपसंहृतं विश्वरूपमपि भगवतः स्वकीयमेव। अत एव हि द्रष्टुमिच्छामि ते रूपम्। इत्यर्जुनेन, पश्य मे पार्थ रूपाणि मम देहे गुडाकेश। इति कृष्णेन चोक्तम्। सति चैवं स्वकमिति कथं विशिष्योच्यते इति चेत्। उभयमपि भगवतः स्वकीयमेव। स्वकमित्यस्य स्वकीयमित्येव नार्थः। किं तु वासुदेवशब्दसमभिव्याहारात् वसुदेवसूनुतयाऽवस्थितं इति स्वेषां स्वकीयानां कं सुखं येन तत् स्वीयानां सुखावहमिति। अल्पार्थे कप्रत्ययः। अणु च स्वकीयं च स्वकं इति चार्थः।

१ म। २। म। शं। रा।

३ महान् व्याप्तः देहः यस्य स महात्मा। ४ इतिशब्दार्थः। ५ तथाशब्दार्थः। म। तथाशब्दः समुच्चये। दर्शयामास चेत्यर्थः। शं। स्वकं रूपं प्राग्यथादृष्टमर्जुनेन तथैव दर्शयामास। भा। तथाभूतं वचनमुक्त्वा। शं। इत्युक्त्वा तथा स्थित एव दर्शयामास। उपसंहारप्रदर्शनयोः नेत्रनिमीलनोन्मीलनयोः स्वाधीनतां अत्यन्ताव्यवधानं च सूचयितुं तथाशब्दः। म। पुनः पश्येत्युक्त्वा। तथाभूतं पुनः पश्यन्तं अर्जुनं प्रति पूर्वरूपं दर्शयामास।

तादृशं रूपं दर्शयामास । विश्वरूपं तु न वसुदेवसूनुतयाऽवस्थितं न च स्वीयानां सुखावहम् । किन्तु भयावहम् । अत एव लोकत्रयं प्रव्यथितं दृष्ट्वा लोकाः । प्रव्यथितास्तथाऽहं इत्याद्यसकृदुक्तमर्जुनेन । नाप्यणुः किं तु महतोऽपि महत् । तादृशं रूपं दर्शयामास । दृष्टवांश्चार्जुनो मानुषं पूर्वदृष्टं रूपम् । तथाऽपि तस्य पूर्वदृष्टमहोग्ररूपदर्शनजनितं भयं नापगतम् । अस्तमितेऽपि सूर्ये तदीयातपततस्य भूतलादेरौष्ण्यमिव । अत उग्रेण वपुषा मया प्रसन्नेनेत्यादिना पूर्वं समाश्वासितवान् कृष्णः सौम्यवपुर्भूत्वा पुनरपि आश्वासयामास । स एवाहं कृष्णः । नान्यः मा भैषीः । न पुनस्तद्रूपं दर्शयिष्यामीति वचनेनाश्वासयामास । १ उदारस्वभावः २ महात्मनाः तादृशाचिन्त्य ३ सत्यसङ्कल्पः ४ परमात्मा हि सः ॥ ५० ॥

धृतराष्ट्रः ।

पूर्वदृष्टं सारथ्यं कुर्वद्रूपं दृष्ट्वा पार्थः किमकरोत् ।

सञ्जयः ।

सौम्यं रूपं दृष्ट्वा प्रसन्नचित्तो भगवता आश्वासितश्च भगवन्तमाह ।

अर्जुन उवाच ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

हे कृष्ण प्राकृतमनुष्यसाधारणं अमानुषमपि मानुषत्वेन प्रतीयमानं सौम्यं तवेदं रूपं दृष्ट्वा पूर्वरूपदर्शनजनितभयानुवृत्त्या व्याकुलचेता अहं त्वदीयात् आश्वासनात् इदानीं भयापगमेन प्रसन्नचेता जातोऽस्मि । सचेता इदानीमहं पूर्वं तु विचेताः मनसः स्वास्थ्याभावेन अविद्यमानप्रायत्वात् । गाम्भीर्यधैर्यौदार्यादिलक्षणं उग्ररूपदर्शनजनितभयादपगतं स्वभावं पुनः प्राप्तोऽस्मि । न तवोग्ररूपं व्यर्थम् । जगतः संहाराय तदावश्यकं हि तव । जनार्दनो हि भवान् ।

अर्जुनः ।

मया प्रार्थितेनापि भवता किमर्थमेतद्रूपं भयावहं मे दर्शितम् । कुतोऽहं दिदृक्षितं रूपं दृष्ट्वा सन्तोष्यस्ये नितरामभ्यार्थिषि । ब्रूहि ।

---

१ । २ । ३ । बहुव्रीहिः । ४ । तत्पुरुषः । १ । २ । म । शं । ३ । रा । गी ।

श्रीभगवानुवाच ।

कृष्णः ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥ ५२ ॥

ब्रह्मादयो देवा अपि अस्य त्वया दृष्टस्य महतो रूपस्य दर्शनं १ नित्यमाकांक्षन्ति । तादृशत्वादनुग्राह्याय ते दर्शितम् । युगपदुदितसूर्यसहस्रप्रभाधिकप्रभावत्वेन नितरां दुर्दर्शत्वात् द्रष्टुमशक्नुवानो नितरामव्यथिष्ठाः । तादृशमपि ते योग्यतामुत्पाद्य परया कृपया दर्शितम् ॥ ५२ ॥

अर्जुनः ।

किं वेदाध्ययनादिसाधनवतामपि दुर्लभम् । कस्तद्दर्शने उपायः । किं तादृशं त्वया प्रदर्शितं महद्रूपम् ।

कृष्णः ।

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥

भक्त्या त्वनन्यया २ शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५४ ॥

न वेदयज्ञाध्ययनैरित्युक्तम् । किं विस्मृतवानसि । भूयोऽपि शृणु वेदादीनां दर्शनसाधनतां ३ निषिध्य दर्शनोपायं स्पष्टं ब्रवीमि । वेदैः एवंरूपोऽहं न द्रष्टुं शक्यः न दानेन द्रष्टुं शक्यः । यागेन पूजया च न द्रष्टुं शक्यः । त्वं भाग्यातिशयात् दृष्टवानसि । न तथा वेदादिसाधनवन्तोऽपि मां पश्येयुः ।

१ म। दृष्टवन्तश्च मत्प्रसादेन । शं। त्वामिव न दृष्टवन्तः । न च द्रक्ष्यन्ति । म। तच्च केषांचित् सुखेन केषांचित् दुःखेन केषांचित् सुखेन दुःखेन च दर्शनीयम्। तव तु सुखेन दुःखेन च । उक्तं हि त्वया । अदृष्टपूर्वं हृषितो मनो मे इति । इदानीं त्वया सह दृष्टवन्तश्च । रा। न दृष्टवन्तः । दृष्ट्वा लोकत्रयं प्रव्यथितमित्यादावुक्तं तेभ्यः प्रदर्शितं तु न तदर्थं किन्तु पार्थार्थमिति भावः ।

२ शक्योऽहमिति प्रयोक्तव्ये शक्य अहमित्यार्षम् । ३ पूर्वोक्तमनूद्य भक्तेरेव साधनत्वमुच्यते । अतो न पौनरुक्त्यम् । महातात्पर्याद्वा ।

सञ्जयः।

यदि वेदादीन्यपि न साधनानि कस्तर्हि दर्शनसाधनभूतः इति चेत् १ अनन्या भक्तिः सैव विश्वरूपस्य मम दर्शने साधनं वेदादिसाधनसहस्रादतिशायितम् । न केवलं विश्वरूपदर्शने भक्तिः साधनम् । शास्त्रैस्तत्त्वतो ज्ञातुं परोक्षज्ञानमाप्तुं यथा वत्साक्षात्कर्तुं २ प्रवेष्टुं मोक्षमाप्तुं मयि प्रवेशरूपां सायुज्यमुक्तिं आप्तुं च भक्तिः साधनम् । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति श्रुतिः ।
मदीयं विश्वरूपं न वेदादिसाधनैर्द्रष्टुं शक्यं किन्तु अनन्ययैव भक्त्या द्रष्टुं शक्यम् । अत एव भक्तिविषये त्वत्तोऽधमैर्न दृष्टम् । दृष्टत्वेऽपि त्वद्वन्न दृष्टम् । तथाविधभक्त्यतिशयेन त्वया दृष्टम् । अहो ते भाग्यातिशयः । यस्यैवंविधमाचिन्त्याद्भुतं दिव्यं सुदुर्दर्शं रूपं यस्य पूर्वोक्तमतिशयितं माहात्म्यं सोऽहं परोक्षतो ज्ञातुं अपरोक्षतः साक्षात्कर्तुं मुक्तावाप्तुं च भक्त्यैव शक्यः नान्येन साधनेन । उक्तं हि मया । पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया इति । तव भक्तियोगं जनयितुं हि द्वितीयषट्के मन्माहात्म्यमभिहितं मद्रूपं च प्रदर्शितं मया । अतो मयि भक्तिं कुरु । त्वं अन्तःशत्रून् जितवानसि शुद्धकर्मकृच्चासि । अतो भक्त्या त्वं मां प्राप्तुमर्हः ॥ ५३ ॥ ५४ ॥

अर्जुनः।

भक्त्या मया किं करणीयमाज्ञापय ।

कृष्णः।

> मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
> निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

न त्वामेवं कुर्विति नियोजयामि । तथा नियोजने निर्बन्धात्ययमिति त्वं मन्येथाः। अत एवं कुर्वन् एवं भवतीति कर्तव्यं फलं च ब्रवीमि । यदि रोचते तर्हि त्वमपि

---

१ शं । न अन्या अनन्या । अपृथग्भूता भगवतोऽन्यत्र कदाचिदपि पृथङ्न भवति या सा। न विद्यते अन्यो देवो विषयः यस्यां सा अनन्या । रा । न विद्यते अन्यत् प्रयोजनं यस्यां सा अनन्या अनन्यप्रयोजना । २ रा । तत्त्वतः प्रवेशः परिपूर्णप्राप्तिः यथावस्थितसर्वाकारेणानुभवः । शं । ब्रह्मैव सत्यं अन्यत् मिथ्येति ज्ञातुं ब्रह्मैवाहमिति साक्षात्कर्तुं विदेहीभूय मदात्मनाऽवस्थातुं च ।

तथा कृत्वा तत्फलं प्राप्नुहि । किं तदिति चेत् । मद्विषयं अकाम्यं कर्म कर्तव्यम् । पशुपुत्रादिषु फलेषु संगश्चेदकाम्यं कर्म न कर्तव्यम् । अतोऽसङ्गेन भाव्यम् । यत्र कुत्रचित् वैरं चेत् तदनिष्टापादनाय कर्म क्रियेत । अतः सर्वभूतेषु निर्वैरेण भाव्यम् । लोके हि स्वेष्टाय परानिष्टाय कर्म कुर्वन्ति । तथा न कार्यम् । संगो वैरं चेत्युभयं परिहर्तव्यम् । भक्तिहीनं कर्म न ज्ञानसाधनायालम् । अतो भक्त्या कर्म कर्तव्यम् । स्वर्गादिषु पुरुषार्थेषु संगे तदर्थमेव कर्म क्रियेत । अतः अहमेव परमप्राप्यवस्त्विति ज्ञानवता भाव्यम् । य एवंविधस्सन् कर्म करोति स मां प्राप्नोति । ज्ञानद्वारा मुक्तो भवति । यदि त्वमेवं कुर्याः तर्हि मामाप्स्यसि । अतः कर्म कुरु परमसात्विकस्य पाण्डोः तनुभवस्त्वं अतः एवं कर्म कुर्याः । आप्नुयाश्च तत्फलं मोक्षम् । अतो निश्शङ्कं कुरु । यः असंगः कर्मकृत् सः चित्तशुद्ध्या मत्परत्वज्ञानवान् भवति । परत्वज्ञानेन मयि निरतिशयप्रीतिरूपभक्तिमान् भवति । मयि अतिशयितया प्रीत्या मदितरसकलविषयस्पृहानिवृत्तिर्भवति । ततश्च तदुपरोधकेषु शत्रुत्वबुद्धिरपैति ततश्च सर्वत्र निर्वैरः समो भवति । ततो मामाप्नोति । मां प्राप्तस्तु न पुनरावर्तते इत्युक्तम् मयाऽष्टमे । वक्ष्यते चोपरिष्टात् । अतस्त्वया वर्णाश्रमधर्मरूपं युद्धाख्यं कर्म कर्तव्यं अकामेन विद्धि ।

इति श्रीभगवद्गीतापन्यासदर्पणे विश्वरूपप्रदर्शनयोगाध्यायार्थप्रदर्शकः एकादशः प्रतिबिम्बः ।

## द्वादशोऽध्यायः ॥

धृतराष्ट्रः ।

१ प्रदर्श्य विश्वरूपं तदुपसंहृत्य पुनरपि मानुषं रूपं प्रदर्श्य मोक्षसाधनसाक्षात्कारहेतुभूतज्ञानसाधनभक्तियोगाय कर्तव्यं कर्म कुर्विति भगवताऽभिहितोऽर्जुनः किमाह तं भगवन्तम् ।

सञ्जयः ।

श्रुत्वा सप्तमादिभिरुक्तं माहात्म्यं दृष्ट्वा च तदैश्वरं रूपं भगवति वासुदेवे भूयसी भक्तिरर्जुनः मत्कर्मकृत् मामेतीति वचनमाकर्ण्य भगवदुपासनां कर्तुं कृतनिश्चयः 'अन्तवत्तु फलं तेषां' देवान् देवयजो यान्ति 'यान्ति देवव्रता देवान्' 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' 'तत्त्वेनातश्च्यवन्ति ते' इत्यादिभिः ब्रह्माद्यन्यदेवताभजनस्य

---

१ प्रथमं पञ्चश्लोक्याः द्वैतरीत्या व्याख्यानं क्रियते ।

नश्वरफलतां 'मद्भक्ता यान्ति मामपि' 'यान्ति मद्याजिनोऽपि मां' 'मामुपेत्य पुनर्जन्म' 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' 'यं प्राप्य न निवर्तन्ते' मत्कर्मकृत् इत्यादिभिर्भगवदुपासनायाः नित्यनिरपायमोक्षफलतां च निश्चित्य ब्रह्मादिभ्य उत्तमाया भगवतोऽवरायाः ब्रह्मादीनां जनन्याः भगवतः पत्न्याः लक्ष्म्याः उपासनं किं ब्रह्माद्युपासनवन्नश्वरफलकं उत भगवदुपासनवत् नित्यनिरपायमोक्षफलकं इति सन्दिहानः तत्परिहाराय भगवन्तमाह ।

अर्जुन उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

य एवंभूतं उक्तमहामाहात्म्योपेतं अचिन्त्याद्भुतदिव्यरूपयुक्तं च त्वां मत्कर्मकृत् इत्युक्तप्रकारेण सततं कर्मयोगेन शोधितमन्तःकरणं त्वयि निवेश्य भक्त्या त्वां सम्यगाराधयन्ति । ये चापि नाशरहितं जडप्रकृत्यभिमानितया अव्यक्तशब्दितं लक्ष्मीतत्त्वं सततयुक्ता भक्ताः पर्युपासते । तेषामुभयेषां मध्ये के अतिशयेन उपायविदः । त्वदुपासक उपायज्ञो वा श्रीतत्त्वोपासक उपायज्ञो वा । नश्वरफलत्वाद्ब्रह्माद्यन्यदेवतोपासनमवरं त्वदुपासनं तु मोक्षफलत्वादुत्तमम् । तत्र नास्ति मे संशयः । लक्ष्म्युपासनं तु अल्पफलकं महाफलकमिति त्वया नोक्तम् । किं तस्या अन्यकोटौ निवेशः उत त्वत्कोटौ । अवरत्वादन्यकोटौ निवेश उचित इति भाति अवरत्वेऽपि परमप्रियभार्यात्वेन त्वद्दत्तमहास्वातन्त्र्यादिविभववत्वात् त्वत्कोटौ निवेश उचित इति च भाति । विमृश्यमाने नित्यमुक्तत्वादिमहामहिमोपेततया त्वत्कोटावेव निवेश्या सा । अतस्त्वदुपासनवत् तदुपासनस्यापि मोक्षदानशक्तिर्वाच्या । न हि लोके पत्युरिव भार्याया अपि स्वीयगेहप्रापणशक्तिर्न दृश्यते । अतस्त्वत्वत्पत्न्या लक्ष्म्याश्चोपासनं मोक्षफलमेवेति निश्चयः ।
मोक्षफलकयोरुभयोरुपासनयोर्मध्ये अनायासेन मोक्षसाधनं किं त्वदुपासनं उत तदुपासनमिति उभयोरन्यतरस्य श्रैष्ठ्ये संशयः तं परिहर । तदनादरेण कोपो हि तव स्यात् । ब्रूहि ॥ १ ॥

श्रीभगवानुवाच ।

कृष्णः ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेताः ते मे युक्ततमा मताः ॥ २ ॥

हे पार्थ ये नित्यं सदा मद्विषये कर्मयोगादिकं कुर्वन्तः तेन च शुद्धमन्तःकरणं मयि निवेश्य मां उपासते। ते मोक्षोपायसिद्धिमन्तो लक्ष्म्युपासकापेक्षया वरिष्ठा मम संमताः। परं तु तैः परमश्रद्धया मदुपासनं कर्तव्यम् । श्रद्धा च आस्तिक्यबुद्धिः सत्यामेव तस्यां ज्ञानद्वारा मोक्षो भवेत् । उक्तं हि मया 'श्रद्धावान् लभते ज्ञान'मित्यादि । तदभावे नरकादिरनर्थो भवेत् । उक्तं हि मया अश्रद्धधानश्च संशयात्मा विनश्यति इति । वक्ष्यते च 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह इति । लक्ष्म्युपासनमदुपासनयोरुभयोर्मध्ये मदुपासनमेव वरम्। अतो मदुपासकाः तदुपासकापेक्षया श्रेष्ठा इति ममाशयः। अतो नात्र संशयः त्वया कार्यः ॥ २ ॥

अर्जुनः ।

श्रैष्ठ्यं हि फलतो वाच्यं अत एव हि अन्यदेवतोपासनापेक्षया त्वदुपासनं महत्तरमभूत् । लक्ष्म्युपासनापेक्षया मदुपासनं वरमित्युक्त्या लक्ष्म्युपासनस्य मोक्षदानशक्तिः नास्तीति भाति । सत्यां तस्यां मोक्षफलकस्य त्वदुपासनस्य तादृश तदुपासनापेक्षया श्रैष्ठ्यं कथं घटेत। ब्रूहि ।

कृष्णः ।

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

ये नाशरहितं इदमेवमिति वाचा निर्देष्टुमशक्यं देशतः कालतश्च व्याप्तं गुणबाहुल्याच्चिन्तयितुमशक्यं अव्याकृताकाशे कूटशब्दिते अभिमानितया स्थितं कदापि स्वपदभ्रंशरहितं शश्वदेकप्रकारं निर्विकारं श्रीतत्त्वं पर्युपासते । ते तद्वारा मामेव प्राप्नुवन्ति। मां प्राप्नुवन्त्येव तेषां मोक्षो भवत्येव नात्र संशयः कार्यः। अस्ति कश्चिद्विशेषस्तदुपासने । श्रीतत्त्वोपासकानां इन्द्रियसमुदायस्य सम्यङ्नियमनमावश्यकं। उपासनं हि ध्यानं श्रीतत्त्वस्वरूपध्याने तदीयविलक्षणस्तनजघनाद्यवयवानुसन्धानं स्यात् । तेन च मनसो विकारः स्यात् । तेन चानर्थः स्यात् अत इन्द्रियाणां अतीव नियमनं कार्यं तैः । सर्वत्र समबुद्धिभिर्भाव्यं तैः । सर्वसम्पत्समृद्धिप्रदत्वादिगुणानुसंधाने महालक्ष्म्या अस्याः प्रसादात् मया संपन्नेन

भाव्यमिति बुद्धिरुत्पद्येत ततस्तदनुकूलेषु मित्रत्वबुद्धिः प्रतिकूलेषु शत्रुत्व-बुद्धिश्च ततो रागद्वेषौ ताभ्यामनर्थः संपद्येत । अतः समलोष्टाश्मकांचनैर्भाव्यं स्थितिः सा महायाससाध्या । सर्वप्राणिहितचिंतनपरैर्भाव्यं तैः । श्रीतत्त्वोपासने संपदुत्पद्येत । तया अहमिति महानभिमान उत्पद्येत । तेन चान्यानभिभवेयुः परेषामहितं चिंतयेयुः आचरेयुश्च । सा हि आसुरीप्रकृतिः तां प्राप्तानां तु अनर्थो नियतः वक्ष्यते च । पतन्ति नरकेऽशुचौ । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । ततो यांत्यधमां गतिमिति । अतः सर्वभूतानां हितचिन्तकैः हितकारिभिश्च भाव्यम् । सा च स्थितिः न सुसुलभा । ये महता आयासेन ईदृशा भूत्वा श्रीत-त्त्वमुपासते तेषां मोक्षो भवत्येव । तादृशी मम दयिता हि सा ॥ ॥ ३ ॥ ४ ॥

अर्जुनः

यदि लक्ष्म्युपासनस्यापि मोक्षदानशक्तिरस्ति तर्हि तदुपासनस्य त्वदुपासनस्य च साम्यमापद्यते । तदुपासनापेक्षया मदुपासनं वरमिति कथं ।

कृष्णः ।

क्लेशोऽधिकतरस्तेषां अव्यक्तासक्तचेतसां ।<br>
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

केवलश्रीतत्त्वोपासनपराणां क्लेशो नितरामधिकः । अतः अव्यक्तद्वारा मत्प्राप्ति-मार्गः प्राणिनां महादुःखप्राप्यः । अतः फले समानेपि क्लेशाधिक्यात् तदुपासन-मवरं । अक्लेशसाध्यत्वान्मदुपासनं वरं । महाक्लेशसाध्यं हि इन्द्रियनियमनादिकं पूर्वोक्तम् । स्त्रीणामाराधनं महते क्लेशाय भवति । तादृशं च तदाराधनं पुरुष-प्रसादद्वारैव फलाधायकं न स्वातन्त्र्येण । लोके हि द्वाररक्षणसारथ्यकरणव्य-जनसेवनादिभिः पुरुषमाराधयंतः कांश्चिद्वत्सरान् तं सेवमानाः सुखेन यापयन्ति । ये तु पचनपरिचरणादिभिः स्त्रीगोष्ठ्यां अनुरुध्य तन्निदेशं पश्यन्तस्ताः शृण्व-न्तश्च तदालापान् संलपन्तश्च ताभिः सेवन्ते ते कतिपयदिवसान्तरेव आरोप्याप-राधं निष्कास्यन्ते । स्वभावो हि स्त्रीणां आसने शयने उत्थाने च अपराधारोप-णम् । अतः लक्ष्मीः न पृथक्सेवनीया । उपासनीया च मद्दयितात्वेन । मदु-पासनेनैकीकृत्य तदुपासने तस्या मम च प्रसादो भवति । प्रत्यवायोऽपि नोत्पद्येत । न हि प्रत्यवैति पुरुषोपासनेनैकीकृत्य स्त्रीणामुपासनं कुर्वन् लोके । अतो नश्वर-फलत्वादन्यदेवतोपासनं क्लेशसाध्यत्वात् अव्यक्तोपासनं च विहाय मोक्षफलकं अ-क्लेशसाध्यं मदुपासनं कुरु ।

१ सञ्जयः ।

श्रुत्वा दृष्ट्वा च भक्तिमुपगतोऽर्जुनः भगवदुपासने कृतनिश्चयः '(१४२) ज्ञानवान् मां प्रपद्यते' इत्यत्र अस्मच्छब्देन निर्गुणत्वमुच्यते । तत्प्राप्तेरेव ज्ञानफलत्वात् । 'नाहं वेदैर्न तपसा' इत्यादौ सगुणमुच्यते । तस्यैव साकारत्वात् । एवमस्मच्छब्दस्य उक्तरीत्या उभयोरपि प्रयोगदर्शनात् । किं 'मत्कर्मकृदि'त्यत्र मदित्यनेन सगुणमुच्यते उत निर्गुणं ब्रह्म किं सगुणं ब्रह्म उपास्यं मया उत निर्गुणं, ब्रह्म इति संशय उत्पद्यते । स च परिहरणीयः । उक्तं हि भगवता । 'संशयात्मा विनश्यती'ति । सगुणनिर्गुणयोरुभयोरुपासनं तत्र तत्र भगवताऽभिहितम् । अतः सगुणं वास्तु निर्गुणं वाऽस्तु किमनया संशयपरिजिहीर्षया इति चेत् । नैकं प्रति उभयोरुपासनमभिहितं विरोधात् । किं तु अधिकारिभेदेन । तत्र मन्दानां मध्यमानां च सगुणोपासनं उत्तमाधिकारिणां निर्गुणब्रह्मोपासनं इति व्यवस्था । सगुणोपासकमन्दमध्यमापेक्षया निर्गुणब्रह्मोपासका उत्तमाः श्रेष्ठा एव तत्र न संशयः अहं तु मन्दः । शोकमोहावेशपरवशत्वात् । अस्थानस्नेहकारुण्यादिदोषाभिभूतत्वाच्च । अतो मां प्रति सगुणोपासनमेव वक्तव्यम् । तच्च स्पष्टमनभिधाय उपादिश्य प्रदर्श्य च मत्कर्मकृदिति कर्तव्योक्त्युपसंहारस्थलेऽभयसाधारणादस्मच्छब्दप्रयोगात् मन्दस्यापि मम निर्गुणब्रह्मोपासनोपदेशोऽयमिति भाति । श्रेष्ठस्यैव आप्तं प्रत्यासेन निगमनस्थले वक्तुमुचितत्वात । मामेतीति फलोक्त्यानुगुण्य च्च । अतो मन्दानां मादृशानामुभयमप्यस्तीति भाति । उभयमप्येकेन कर्तुं न शक्यं विरोधात् । अतो मन्दकर्तृकसगुणनिर्गुणोपासनयोर्मध्ये किमुत्तमं किमवरं इति संशयं परिहृत्य इदमुत्तममिति निश्चित्यैव मयोपासनं कर्तव्यं इत्याशयवान् उक्तसंशयपरिहाराय तं भगवन्तमाह ।

अर्जुनः ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

हे कृष्ण एवं मत्कर्मकृदित्याद्युक्तप्रकारेण सदा समाहिताः मनःसमाधानपूर्वकं त्वद्विषयकर्मयोगादौ प्रवृत्ताः भक्तियुक्ताः सन्तो ये त्वां सगुणमुपासते । ये चापि नाशरहितं सर्वकरणागोचरं निर्गुणं परं ब्रह्म पर्युपासते । तेषां सगुणनिर्गुणोपास-

---

१ सैषा पञ्चश्लोकी अद्वैतरीत्या व्याख्यायते ।

कानां मन्दानां मध्ये के अतिशयेन योगज्ञाः समाधियोगस्वरूपप्रकारफलज्ञानवन्तः । १ किं मन्दमध्यानामादृशानां सगुणोपासनं श्रेयः । उत निर्गुणोपासनं, ब्रूहि ।

श्रीभगवानुवाच ।

कृष्णः ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेताः ते मे युक्ततमा मताः ॥ २ ॥

हे पार्थ ये मयि सगुणे ब्रह्मणि मन आवेश्य सदा समाहितान्तकरणाः परया श्रद्धया सहिताः सन्तः सगुणं मामुपासते । ते सगुणब्रह्मोपासका मन्दाः निर्गुणब्रह्मोपासने प्रवृत्तेभ्यः मन्देभ्यः उत्तमा योगिनः मे मताः । मन्दानां निर्गुणब्रह्मोपासनं दुष्करम् । अतो दुःसाधं । अतो न शीघ्रमर्थदम् । सगुणब्रह्मोपासनं तु सुकरं सुसाधं शीघ्रमर्थदम् । अतस्तेषां निर्गुणोपासनापेक्षया सगुणोपासनमेव श्रेयः । अतस्तेषु निर्गुणोपासकापेक्षया सगुणोपासका उत्तमाः योगिनः । अतस्त्वं सगुणं मामेवोपास्व । अतस्तदेव मया मत्कर्मकृदित्यनेनाभिहितम् । सम्यगिदमवधारय ॥ २ ॥

अर्जुनः ।

मन्देषु निर्गुणब्रह्मोपासका अवरा इत्युक्तम् । य उत्तमा निर्गुणब्रह्मोपासनार्हाः निर्गुणं ब्रह्मोपासते । किं ते उत्तमाः उतावराः, ब्रूहि ।

कृष्णः ।

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

निर्गुणोपासनाधिकारिणो ये ज्ञानिनः ते उत्तमा एव । अस्ति तेषामन्येभ्यो महान् विशेषः । 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' 'ज्ञानी त्वात्मैव मे मतम्' 'ज्ञानवान् मां प्रपद्यते' इत्यादिना

---

१ मन्दकर्तृकयोः सगुणनिर्गुणोपासनयोर्मध्ये कतरत् श्रेयः । इति संशयः । पञ्चमादौ अविद्वत्कर्तृकयोः कर्मयोगतत्संन्यासयोर्मध्ये कतरत् श्रेयः इतिवत् ।

मया तेषामभिहितो महिमातिशयः । कुतस्तेषां महानुभावानामवरत्वशङ्का । न तान् प्रति प्रश्नः परिहारो वा आवश्यकः । यदि तान् प्रति प्रश्नः स्यात् तर्हि निर्गुणोपासकेभ्यस्तेभ्यः सगुणोपासका उत्तमा इति नोच्येत । तेषामुत्तमत्वस्य व्यवस्थितत्वात् । अतो मन्दानां विषय एव तव प्रश्नः मदीयस्तत्परिहारश्च । ये तु निर्गुणोपासनार्हा महान्तः निर्गुणमुपासते ते उत्तमा एव । ते मां साक्षादव्यवधानेन प्राप्नुवन्ति । मद्रूपतां प्राप्नुवन्ति । ते सम्यक् निगृहीतेन्द्रियाः सत्यां विषयवासनायां कुत इन्द्रियाणां नियमनमिति चेत् ते सर्वेषु विषयेषु समबुद्धयः । ते सर्वभूतहिते रताः । व्युत्थानदशायां न कस्याप्यहितमाचरेयुस्ते । ते तु परकीयं सुखं दुःखं च आत्मसुखदुःखवत् पश्यन्ति । उक्तं हि मया 'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखं वा यदि वा दुःखं स योगी परमो मतः' इति । १ सर्वभूतानां हितो हि प्रत्यगात्मा तस्मिन्नेव रताः । सर्वत्र समशब्दितब्रह्मदृष्टयश्च ते । त एव हि निर्गुणं ब्रह्म उपासितुमर्हाः न मन्दा मध्यमा वा । निर्गुणं हि ब्रह्म नाशरहितं केनापि शब्देनावाच्यत्वात् इदमेवमिति व्यपदेष्टुमशक्यम् । चक्षुरादिसर्वेन्द्रियागोचरम् । सर्वव्यापि अत एव जात्यादिरहितम् । परिच्छिन्नस्यैव हि जात्यादियोगः । मनसा चिन्तितुमशक्यम् । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इति श्रुतिः । कूटं बहिर्दृश्यमानगुणं अन्तर्दोषं वस्तु । यत् मिथ्याभूतं सत्यतया प्रतीयते तत्कूटम् । माया हि तादृशी । कूटसाक्ष्यमित्यादौ प्रसिद्धोऽयमर्थः । तस्यामधिष्ठानतया तिष्ठतीति कूटस्थं अज्ञानतत्कार्यारोपाधिष्ठानं तदध्यक्षतया स्थितम् । उक्तं हि मया मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति । कूटं राशिः तद्वत्तिष्ठति । ब्रह्म हि एकमपि कार्याणामानन्त्याद्राशिरिव तिष्ठति । २ कूटं आकाशं तद्वत् अप्रकम्प्यतया तिष्ठति तत् । निर्विकारम् । अत एव परिणामरहितं नित्यं च । एतादृशं अवाङ्मनसगोचरं निर्गुणं ३ ब्रह्मोपासीनाः महानुभावाः नितरामुत्तमाः । नात्र ते प्रश्नस्य परिहारस्य वा विषयाः ।

१ शंक । २ शंक । ३ शं भा । उपासनं नाम—यथाशास्त्रं उपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यदासनं तत् उपासनमाचक्षते । मधु । श्रवणेन प्रमाणगतां असम्भावनामपोह्य मननेन च प्रमेयगतां अनन्तरं विपरीतभावनानिवृत्तये विजातीयप्रत्ययतिरस्कारेण तैलधारावदविच्छिन्नसमानप्रत्ययप्रवाहरूपेण निदिध्यासनेन विषयीकरणं यत् तदुपासनम् ।

अर्जुनः ।

आस्तां तत् । सन्तु नाम ते तादृशाः । निर्गुणोपासनस्य महाधिकारिकत्वात् तदेव क्रियतां प्रयत्नतो मन्दैः । कुतस्सगुणोपासनं तैः कार्यमित्युच्यते ब्रूहि ।

कृष्णः ।

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

यदि ते सगुणोपासनार्हा मंदा हठादेव निर्गुणोपासने प्रवर्तेरन् तर्हि तेषां क्लेशः अत्यन्तमधिकः स्यात् । सगुणोपासकानामपि विषयेभ्यः आकृष्य मनसः सगुणे ब्रह्मणि निवेशने अकाम्यकर्मकरणादौ च क्लेशोऽधिक एव । तथापि निर्गुणोपासकनां क्लेशोऽत्यन्तमधिकः । कुत इति चेत् । अव्यक्तशब्दितं निर्गुणब्रह्मरूपं फलं देहाभिमानवद्भिः सगुणोपासकैरिव न सुखेनावाप्यते । किंतु महता दुःखेन । देहेन्द्रियादिषु अहं ममतारूपाभिमानत्यागानन्तरसाध्यनिर्गुणब्रह्मोपासनैकप्राप्यत्वान्निर्गुणस्य ब्रह्मणः । अभिमानपरित्यागस्तु महायाससाध्यः । अव्यक्तशब्दितनिर्गुणब्रह्मविषया ध्यानरूपा निष्ठा तु महता दुःखेन प्राप्या । विषयत्यागः अभिमानत्यागः निराकारे मनसो निवेशनं चेत्येतद्देहाभिमानवतां कथं स्यात् । न कथंचिदपि । अतो महान् क्लेशो निर्गुणनिष्ठासाधने । अतो देहाभिमानिनां तादृशानां मन्दानां सगुणोपासनमेव नितरां श्रेयः । अतः सगुणस्य ममैवोपासनं कुरु ॥ ५ ॥

सञ्जयः ।

२ मत्कर्मकृत् मामेतीति भगवत्प्राप्तये भगवदुपासनं कर्तव्यत्वेनोक्तं भगवता । श्रुत्वा तदर्जुनः किं भगवत्प्राप्तये तत्प्रापकत्वेन भगवानुपास्यः उत आत्मस्वरूपप्राप्तये तत्प्रापकत्वेन । परमात्मानं प्राप्यं मत्वा तत्प्राप्तये प्रापकत्वेन भगवदुपासनं परमात्मोपासनम् । आत्मस्वरूपं प्राप्यं मत्वा तत्प्राप्तये प्रापकत्वेन भगवदुपासनं आत्मोपासनम् । न परमात्मन इव आत्मन उपासनमस्ति । न हि परमात्मन इव आत्मनो नामोच्चारयन्ति । न हि परमात्मानमिव आत्मानं स्तुवन्ति। अत उभयमपि परमात्मोपासनमेव । प्राप्यभेदात् परमात्मोपासनं आत्मोपासनं इति भेदेन व्यवहारः । परमात्मप्राप्त्यर्थमुपासनं आत्मस्वरूपप्राप्त्यर्थमुपासन-

मिति तदर्थः । परमात्मने उपासनं आत्मने उपासनं इति विग्रहः । परमात्मोपासने परमात्मनः प्राप्यत्वात् श्रवणादिना तत्स्वरूपयाथात्म्यनिश्चय आवश्यकः। आत्मोपासने आत्मस्वरूपस्य प्राप्यत्वात् श्रवणादिना तत्स्वरूपयाथात्म्यनिश्चय आवश्यकः । प्राप्यस्वरूपमाहात्म्यापरिज्ञाने तत्प्राप्तीच्छायाः तदर्थप्रवृत्तेश्चानुदयात् । तत्र आत्मोपासनं वरमिति भाति । आत्मस्वरूपस्य प्राप्यत्वात् । आत्मस्वरूपप्राप्त्या हि सुखानुभवः । मोक्षे भगवन्तं प्राप्तस्यापि आत्मस्वरूपप्राप्त्यैव सुखानुभवः । न हि मुक्तस्येव बद्धस्य प्रकृतिबन्धरहितशुद्धात्मस्वरूपमप्राप्तस्य परमात्मस्वरूपानुभवेऽपि तादृशसुखानुभवः । अत आत्मस्वरूपलाभाय आत्मस्वरूपप्राप्तिहेतुभूतं आत्मोपासनं कार्यम् । तेन आत्मस्वरूपलाभो भवति । भगवल्लाभाय भगवदुपासने कृतेऽपि तेन शुद्धात्मलाभो भवति । स्वप्राप्तीच्छया कृतेन स्वोपासनेन सन्तुष्टो भगवान् स्वस्वरूपानुभवं दित्सन् बद्धस्य तदनुभवानर्हतया तद्योग्यतापादनाय प्रकृतिबन्धान्मोचयित्वा प्रकृतिबन्धरहितशुद्धात्मस्वरूपं प्रापयति । अतः परमात्मोपासनमपि वरम् । अत आत्मलाभाय परमात्मोपासनमपि कर्तुमर्हम् । तेनाप्यात्मस्वरूपलाभो भवति । अत उभयोरपि कर्तव्यत्वम् । न चैकेनैकदा उभयं कर्तुं शक्यम् । अभिसन्धिभेदसत्त्वात् । अतः अन्यतरश्रैष्ठ्यं ज्ञात्वा अन्यतरत्कर्तव्यम् । मत्कर्मकृदिति परमात्मोपासनोक्त्या तदेव श्रेष्ठमिति चेत् । मदुपासको मां मत्समानं शुद्धात्मानं च प्राप्नोतीत्यर्थसम्भवेन तस्य उभयसाधारण्यात् अन्यतरश्रैष्ठ्यनिश्चयो न सम्भवति । अत एकस्मै आत्मलाभरूपप्रयोजनाय कर्तव्ययोः आत्मोपासनपरमात्मोपासनयोर्मध्ये कतरत् शीघ्रं स्वसाध्यनिष्पादकत्वेन वरम् । इति पृष्ट्वा कृष्णं तन्मुखादुत्तमं विदित्वा यदुत्तमं तत्कर्तव्यम् । अतः पृच्छाम्येनमित्याशयवान् भगवन्तमाह ।

अर्जुनः ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

हे देव त्वया सह नित्ययोगं कांक्षमाणाः भगवन्तं त्वामेव प्राप्यं मन्यमानाः ये भक्ताः त्वामेवं मत्कर्मकृदित्याद्युक्तरीत्या समग्रमुपासते । ये च चक्षुरादीन्द्रियागोचर-

२ सैषा पंचश्लोकी विशिष्टाद्वैतरीत्या व्याख्यायते । (पूर्वपुटटिप्पणम्)

त्वात् नाशरहितत्वादक्षरशब्दितं अव्यक्तशब्दितं च प्रत्यगात्मानं पर्युपासते । तेषामुभयेषां मध्ये के अतिशयेन योगशब्दितोपासनविदः । केषां शीघ्रं फलला-भो भवति । केन उपासनेन शीघ्रमनायासेन चात्मस्वरूपलाभो भवति । उक्तरू-पयोर्द्वयोरुपासनयोर्मध्ये शीघ्रफलजनकत्वेन सुकरत्वेन च श्रेष्ठं कतरत् ॥ १ ॥

श्रीभगवानुवाच ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेताः ते मे युक्ततमा मताः ॥ २ ॥

हे पार्थ ये मया सह नित्ययोगं कांक्षमाणाः मामेव प्राप्यं मत्वा प्राप्त्यर्थं मयि मन आवेश्य परया श्रद्धया उपेताःसन्तः मां उपासते । ते उभयेषूपासकेषु मध्ये उत्तमाः उपासका मे सम्मताः । ते मत्समानाकारं शुद्धात्मानं शीघ्रं सुखेन च प्राप्नुवन्ति । अतो मत्प्राप्त्यर्थं क्रियमाणं परमात्मोपासनशब्दितं मदुपासनं श्रेष्ठम् ॥ २ ॥

अर्जुनः ।

आत्मोपासनशब्दितं त्वदुपासनं कुर्वाणा आत्मस्वरूपानुभवरूपं फलं किं न प्राप्नुवन्ति ।

कृष्णः ।

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४

ये तु इन्द्रियग्रामं संनियम्य भिन्नभिन्नाकारेषु पिपीलिकादिदेवान्तदेहेषु प्रत्यगात्म-तयाऽवस्थितेषु सर्वेषु आत्मसु ज्ञानाकारतया साम्यबुद्धयः । दृश्यमानं वैषम्यं प्रकृतिपरिणामदेहेन्द्रियादिगतं नात्मस्वरूपगतं इति निश्चयवन्तः अत एव सर्वभूतहिते रताः अहं ममतारूपदेहाभिमानहेतुकात् परेषां अहिताचर-णात् निवृत्ताःसन्तः देहादन्यतया देहवाचकदेवमनुष्यादिशब्दैर्निर्देष्टुमनर्हं चक्षुरादीन्द्रियागोचरं कर्मवशाद्देवमनुष्यतिर्यग्रूपोत्तममध्यमाधमदेहेषु वर्तमानं तथाऽपि तदन्यतया तेन रूपेण चिन्तयितुमनर्हं असाधारणाकारेषु देहेषु साधार-णतया वर्तमानत्वेन कूटस्थपुरुषतुल्यम् । कूटस्थो हि मूलपुरुषः नानाभेदभि-

ज्ञानामनेकेषां साधारणो भवति । कूटशब्दितायोयन्त्रवत् स्वसंश्लिष्टप्रकृतेर्नानाविकृत्यापादकमपि स्वयं विकाररहितम् । अत एव आत्मकूटतौल्यात् कूटशब्दोक्तः । अत एवात्मस्वरूप एवावस्थितः कूटस्थशब्देनोक्तो मया ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः इत्यत्र । परिणामराहित्येन स्वासाधारणाकाराच्चलनरहितं अत एव नित्यं नित्यत्वेन नाशरहितत्वादक्षरशब्दवाच्यम् । अक्षरं ब्रह्म परमं अव्यक्तोऽक्षर इत्युक्तः इत्यादौ अव्यक्ताक्षरशब्दाभ्यां उक्तं च आत्मतत्त्वं पर्युपासते । तस्य प्राप्यत्वबुद्ध्या तत्प्राप्त्यर्थं तत्प्रापकत्वेन मामुपासते । ते मत्समानाकारं शुद्धात्मानं प्राप्नुवन्त्येव । नात्र संशयः ॥ ३ ॥ ४ ॥

अर्जुनः ।

यदि आत्मोपासनं कुर्वतामपि आत्मस्वरूपलाभो नियतं भवत्येव । तर्हि परमात्मोपासकानां तदपेक्षया श्रेष्ठत्वं 'ते मे युक्ततमा' इति त्वयोक्तं कथं संगच्छेत । न हि एकफलसाधनयोरुपाययोर्मध्ये अन्यतरमाश्रित्य तेन तत्फलं प्राप्तुं यतमानः उपायान्तरेण तदेव फलं प्राप्तुं यतमानादुत्तमो भवितुमर्हति । साम्यं हि तयोरुचितम् । वद ।

कृष्णः ।

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

अव्यक्तशब्दित आत्मतत्त्वे आसक्तमनसां तत्प्राप्तिकामानां तदर्थं आत्मोपासनं कुर्वतां क्लेशः अधिकतरः । कुत इति चेत् अव्यक्तशब्दितात्मतत्त्वयाथात्म्यविषयकज्ञानं देहाभिमानवतां न अनायासेन स्यात् । ते हि देहमेवात्मानं मन्यन्ते । अनूदितश्चायं पक्षः 'अथ चैनं नित्यजात'मिति मया । देहात्माभिमानं परित्यज्य आत्मानं देहभिन्नं देहनाशेऽप्यविनश्यन्तं ज्ञानाकारं प्रकृतिबन्धवशात् संसारदशायां ज्ञानादिसंकोचं प्राप्नुवन्तं परमात्मनः प्रसादेन पुनः स्वस्वरूपं यथावस्थितं प्राप्स्यन्तं च यथावत् ज्ञात्वा तादृशात्मस्वरूपयाथात्म्यनिश्चयपूर्वकतत्प्राप्तीच्छाया तत्प्राप्तये तत्प्रापकत्वेन हि मदुपासनं आत्मोपासनशब्दितं कर्तव्यं । न हि देहाभिमानपरित्यागेन्द्रियजयसमबुद्धिभूतहिताचरणाहिताचरणनिवृत्त्यादिकं अनायासलभ्यम् । किन्तु महाक्लेशलभ्यम् । परमात्मप्राप्तये तत्प्रापकत्वेन परमात्मोपासनं तु विनैव देहात्माभिमानपरित्यागादिकं पुराणकथाश्रवणदर्शनादिमा-

त्वजन्यतन्माहात्म्यपरिज्ञानपूर्वकतत्प्राप्तीच्छाहेतुकत्वादनायासलभ्यम् । अतः क्लेशसाध्यात् आत्मोपासनात् अक्लेशसाध्यं मदुपासनं वरमिति युक्तमेव । अतः क्लेशेन आत्मोपासकेभ्यः अक्लेशेन परमात्मोपासका श्रेष्ठा एव । ईप्सितमेकं फलं महाक्लेशेन लब्धुं यतमानादनायासेन तदेव फलं लब्धुं यतमानो वरिष्ठ इति प्रसिद्धं हि लोके । आत्मोपासकानां स्वरूपलाभः केवलम् । परमात्मोपासकानां तेन सह परमात्मस्वरूपलाभोऽपि । लोके हि स्वसुखमात्रलाभाय प्रभुं सेवमानाः यत्र कुत्रापि स्थित्वा तत्कृपया सुखं केवलं प्राप्नुवन्ति । तत्समीपस्थित्यादिकामनया तं सेवमानास्तु वसनाभरणादिभिः स्वसमीपावस्थानयोग्यतामापाद्य तेन स्वसमीपेऽवस्थापनात् सह स्वसुखेन सदा तदनुभवसुखमपि लभन्ते । सुकरमचिरेणैव फलप्रदं च परमात्मोपासनं अतस्त्वं परमात्मनो ममोपासनमेव कुरु ॥ ५ ॥

अर्जुनः ।

१ पृथक् श्रीतत्त्वोपासनं २ निर्गुणब्रह्मोपासनं ३ आत्मोपासनं च विहाय मदुपासनमेव कार्यमित्युक्तम् । त्वदुपासने तादृशक्लेशो नास्ति वा । इन्द्रियनियमनादिकं नापेक्षितं वा । त्वदुपासनं इतरोपासनापेक्षया शीघ्रं फलं जनयति वा वद ।

कृष्णः ।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

मामेव परमप्राप्यं फलमुद्दिश्य 'कर्मण्येवाधिकारस्ते' इत्याद्युक्तप्रकारेण कर्माणि कृत्वा 'तत्कुरुष्व मदर्पण' मित्युक्तरीत्या तानि सर्वाणि सर्वेश्वरः सर्वतन्त्रस्वतन्त्रः सर्वान्तर्यामी भगवानेव मयि स्थित्वा कारयति तस्येदं कर्म इदं तस्मै समर्पयामि प्रीयतामनेन कर्मणा स भगवान् इति मयि समर्प्य विहितकर्माचरणतत्समर्पणपरितुष्टमनसो मम प्रसादेन शुद्धतामुपगतेन मनसा मां ध्यान्तः तदभ्यासजनितेन ४ स्वातन्त्र्येण लक्ष्मीब्रह्माद्यन्यदेवताध्यानवर्जितेन ५ अन्यदेवताल-

१ म । २ शां । ३ रा । ४ मा । ५ शां ।

न्यनरहितेन १ अन्यप्रयोजनोद्देशरहितेन निदिध्यासनाख्येन असंप्रज्ञातसमाधियोगापरपर्यायेण ध्यानयोगेन मदेकविषयेण मामाराधयन्ति । तेषामहं शीघ्रमेव मृत्युरूपात् मृत्युयुक्ताच्च २ संसारसमुद्रात् सम्यक् उद्धर्ता भवामि । हे पार्थ अयमत्रेदम् । लोके यः सागरे निमज्ज्योन्मज्जतः समुद्धरति यश्च सागरं तितीर्षून् तारयति स सः किमपि गृहीत्वैव समुद्धरति तारयति च । तद्वत् त्वं किं गृह्णासि किं तुभ्यं समर्पणीयं अपारे भवसागरे पारं जिगमिषुभिः वद इति चेत् । अहमपि किंचित् गृहीत्वैव समुद्धरेयं तारयेयं च । तत्किमिति चेत् । धनहीनो धनाकांक्षी धनं गृह्णाति लोके नाहं तथा किं तु लोकमहेश्वरः लक्ष्मीपतिः किलाहम् । अतो मम यदपेक्षितं तद्गृह्णामि । तत्किमिति चेत् । ३ मनः । इतं दुष्टेन मनसा जनोऽयमवसाद्यते । मयि समर्पितं चेत् संशोध्य तत् तेन मनसा कर्मयोगादिकं कारयित्वा मोचयित्वा प्रकृतिबन्धादुद्धरिष्यामीति समुद्दिधीर्षया मनसा मयि समर्पणं कामये । ४ प्राणिनामेवमयि कांक्षदुपायो लभ्यते वा इत्युपायान्वेषी खल्वहम् । अतो मदपेक्षितं मनो मयि समर्प्य मामाराधयतां अहं समुद्धर्ता भवामि । अस्ति च मदुपासनेऽयं विशेषः । अन्योपासनस्य क्लेशसाध्यत्वोक्त्या मदुपासनस्य अक्लेशसाध्यत्वं पूर्वं सूचितम् । अन्योपासनोक्तौ ५ अव्यक्तं पर्युपासते इति स्वोपासनोक्तौ नित्ययुक्ता उपासते इति प्रयोगभेदाच्च । तदेव अक्लेशसाध्यत्वं अत्र उपासते इत्यनेन सूचनयानूद्य शीघ्रफलजनकत्वं नचिरादिति स्पष्टमुक्तम् ।

६ ये मां उपासते तेषामहं समुद्धर्ता भवामीति कथमुच्यते । तव सगु-

---

१ रा । न विद्यते पृथक् स्वातन्त्र्येण अन्या लक्ष्मीः अन्यो ब्रह्मादिर्वा यस्मिन् सः । न अन्यो देवो विषयो यस्मिन् सः । न अन्यत्प्रयोजनं यस्य सः । अनन्यः तेन । इति भूयाद (न ?)र्थो बोध्यः । २ अत्र तृष्णातोय भवजलधिगतानां इत्यादयः श्लोका अनुसंधेयाः । ३ अत्र करस्थे हेमाद्रौ इति श्लोकोऽनुसंधेयः । त्वय्यम्बुजाक्षाखिलसत्वधाम्नि समाधिनावेशितचेतसा ये । त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् इति श्लोकश्च । न हि कार्यधुरीणे प्रौढे पुत्रे सति पितुः इदमेवं करिष्यामीति वचनं फलाय कल्पते । अतः पुत्रस्य ब्रह्मणो वचनं आवेशितचेतःशब्दघटितं दार्ढ्याय योजनीयमिति इति भावः । ४ अत्र 'वने चरामो वसु चाहरामः' अन्याहर (?) प्रहर इत्यादिकमनुसन्धेयम् । ५ उभयोरन्यतरस्य श्रैष्ठ्यनिश्चयात् उभयत्र पर्युपासते' इत्युक्तेरर्जुनस्य । ६ मधु ।

णब्रह्मत्वात् सगुणब्रह्मोपासनस्य संसारसागरतरणहेतुत्वाभावात् इति चेत् अज्ञाननतत्कार्यप्रपञ्चरूपात् समुद्रात् सं अनायासेन उत् ऊर्ध्वं उत्कृष्टे निर्गुणे ब्रह्मणि धर्ता धारयिता भवामि । सं अनायासेन उत् उत्तमम् यत् निर्गुणोपासनं तत् हर्ता प्रापयिता भवामि । सगुणं ब्रह्माहं उपासितः प्रसन्नः सन् निर्गुणब्रह्मोपासनयोग्यतामापाद्य तत्प्रापकः तस्मिन्नेवावस्थापकश्च भवामीत्यर्थः । सगुणब्रह्मोपासनमनायासेन निर्गुणब्रह्मोपासनासिद्धिं गमयतीति भावः । सगुणब्रह्मोपासनाधिक्येन ब्रह्मलोकादिषु महैश्वर्यप्राप्तौ तु तदनुभवानन्तरं विना गुरूपदेशं विना च श्रवणमननिदिध्यासनाद्यावृत्तिक्लेशं ऋषीणामिव स्वयमाविर्भूतेन वेदांतवाक्येन तत्त्वज्ञानोदयात् निर्गुणब्रह्मोपासनफलभूतपरमकैवल्यप्राप्तिः । अतोऽहं समुद्धर्ता भवामीति युक्तम् ॥ ७ ॥

अर्जुनः ।

अस्तु नामैवं । तदर्थं मया किं कर्तव्यं तद्विशिष्योपदिश ।

कृष्णः ।

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥

संकल्पविकल्पात्मकं मनः मय्येव मन आधेहि । न मनसा ग्रहणमात्रं प्रयोजनाय कल्पेत । अतः अध्यवसायात्मिकां बुद्धिं मय्येव निवेशय । मनसा गृहीतवस्तुसामान्ये न बुद्धिर्निवेशते । अतस्त्वं प्रयत्नेन निवेशय । मत्स्वरूपं मनसा गृहीत्वा बुद्ध्या निर्धार्य मां अनन्ययोगेन भजस्व । किमस्य फलमिति चेत् । १ मनोबुद्ध्योर्निवेशनानन्तरं २ शरीरपातानन्तरं मुक्तो भूत्वा मय्येव स्थास्यसि । ३ मदात्मना ४ मत्समीपे ५ मत्तुल्यतया स्थास्यसि नात्र संशयः ॥ ८ ॥

अर्जुनः ।

मय्येव मन आधत्स्वेत्युक्तं तत्कथं घटेत । मनसश्चञ्चलत्वेन एकस्मिन्नालम्बने स्थापयितुमशक्यत्वात् । उक्तं हि मया 'चञ्चलं हि मनः कृष्ण प्रमाथि बलवत् दृढम् । तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्' इति । अतस्तदशक्तस्य मम का गतिः ब्रूहि ।

१ म रा । २ शां । ३ शां । ४ म । ५ रा ।

कृष्णः ।

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९ ॥

हे पार्थ चञ्चलस्य मनसः मयि स्थिरतया अवस्थापने त्वमसमर्थोऽसि चेत् तर्हि चंचलं मय्यवस्थापितमपि पुनःपुनर्विषयेषु १ धावमानं मन आकृष्याकृष्य मयि स्थापनरूपाभ्यासलक्षणोपायेन तादृशाभ्यासपूर्वकसमाधियोगेन वा मां प्राप्तुमिच्छ । न केवलमिच्छामात्रं फलसाधनायालम् । अतो महान्तं यत्नं च कुरु । उक्तं हि मया 'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते' इति । राजसूये शत्रून् जित्वा धनमाहृतवानसि । उक्तं हि त्वयैवोत्तरं प्रति, सर्वान् जनपदान् जित्वा वित्तमादाय केवलम् । मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम् । इति स त्वं मनः शत्रुं जित्वा तत्त्वज्ञानधनमाहर । अत उच्यते मामिच्छाप्तुं धनञ्जयेति ॥ ९ ॥

अर्जुनः ।

चञ्चलत्वान्मनसः एकस्मिन्नालम्बने सर्वतः समाहृत्य पुनः पुनः मनसः स्थापनरूपाभ्यासोऽपि कर्तुमशक्यः का गतिः ।

कृष्णः ।

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥

हे पार्थ त्वं उक्तरूपे अभ्यासेऽपि असमर्थोऽसि यदि तर्हि मदेकोद्देश्यकानि द्वितीयादौ उक्तरूपाणि अकाम्यकर्माणि भक्त्या श्रद्धया मत्प्रीतिद्वारा मोक्षसाधनत्वबुद्ध्या अनुतिष्ठ । त्वत्प्रीत्यर्थं कर्म कुर्वतः अपि सिद्ध्येत् मोक्ष इति चेत् । मत्प्रीत्यर्थं कर्माणि कुर्वन्नपि त्वं २ मोक्षं ३ ब्रह्मभावं ४ मत्प्राप्तिरूपं फलं ध्यानद्वारा प्राप्स्यसि ॥ १० ॥

अर्जुनः ।

'योगस्थः कुरु कर्माणि' 'तस्मादसक्तः सततं कार्यं कर्म समाचर ।' इत्याद्युक्तरीत्या त्वदेकोद्देश्यकानि कर्माणि कर्तुमशक्तोऽस्मि । अनन्यभावानुदयात् तस्य च कर्मकरणजन्यचित्तशुद्धिमूलज्ञानैकलभ्यत्वात् । अतः का गतिः ।

१ अत्र चेतः,क्वा ते चिकीर्षा इति श्लोकोऽनुसन्धेयः । २ म । ३ शां । ४ रा ।

कृष्णः ।

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ॥
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

१ अनन्यप्रयोजनं मत्प्रसादैकप्रयोजनं अनन्यविषयकं मदेकविषयकं कर्म कर्तुमपि अशक्तोऽसि चेत् तर्हि एवं कुरु मद्योगमाश्रितो भव । मयि योगः सम्बन्धः कृतस्य कर्मणो मयि समर्पणरूपः तमाश्रय । उक्तं हि मया 'तत्कुरुष्व मदर्पण'मिति । 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति' । इत्युक्तरीत्या यस्यां यस्यां देवतायां भक्तिरुदेति तां तामुद्दिश्य श्रद्धया कर्माणि कुरु । अथ तानि मय्यर्पय । तावन्मात्रेण तुष्टोऽहं विषयान् प्रति धावमानं तव मनः समाकृष्य ते वशे स्थापयामि । ततो २ मनसो वशीकरणात् फलापेक्षां परित्यज्य विहितं कर्म मदेकविषयं मत्प्रसादैकप्रयोजनं कुरु । तथा कुर्वन्नपि त्वं सिद्धिमवाप्स्यसि ॥ ११ ॥

३ तत्कुरुष्व मदर्पण'मित्युक्तरीत्या मयि [illegible] योगमाश्रितः सन् मदर्थं कर्म कर्तुमपि अशक्तोऽसि चेत् तर्हि मदेकशरणत्वरूपं मद्योगमाश्रितः सन् ४ मत्कथा-सपुराणकथाश्रवणादिभिरुपायैः 'तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।' इत्युक्तरीत्या अनुष्ठानेनैव मनसो मयि समर्पणपर्यवसानेन च इन्द्रियवशीकरणं सम्पादय । ततः सर्वेषां कर्मणां फलत्यागं कुरु । अनभिसन्धाय फलं विहितं कर्म अनन्यप्रयोजनं मदेकविषयं कुरु । [illegible] ॥ ११ ॥
५ मद्योगं मम अत्यर्थं प्रियं भक्तियोगं आश्रितः सन् भक्तियोगाङ्गरूपं मदर्थं कर्म कर्तुमशक्तोऽसि चेत् तर्हि तद्योगमाश्रित्य मदर्थं कर्म कुरु । त्वामक्षरमिति प्रश्ने मामक्षरमिति परिहारे च भगवतः प्रतिनिर्देशत्वेन अक्षरशब्दवाच्यस्य जीवात्मनोऽभिधानात् मद्योगमाश्रितः मदर्थं कर्म कर्तुमशक्तत्वेन अक्षरयोगमाश्रित्य तदर्थं हि कर्म कर्तव्यम् । [illegible] कुरु । अक्षरयोगः अक्षरशब्दित-

१ द्वैतरीत्या व्याख्या । २ म । श । यतः निगृहीतः आत्मा मनः यतात्मा तद्वान् । मधु । यतः संयतेन्द्रियः स चासौ आत्मवान् प्रशस्तमनाः विवेकी च यतात्मवान् । शांक । यतात्मवान् मयि योगं कर्मणां योजनं आश्रितः सन् फलत्यागं कुरु । न हि नेदं मदर्थं अपि तु परार्थमेवेति निश्चित्य क्रियमाणे कर्मणि फलापेक्षा उदेति । ३ अद्वैतरीत्या व्याख्यानम् । ४ गी । मयि योगः यस्य सः ममयोगः यस्मिन् सः मद्योगः तं मद्भक्तम् । ५ विशिष्टाद्वैतरीत्या व्याख्या ।

प्रत्यगात्मानुसन्धानरूपः सप्रकारं प्रथमषट्के उक्तः। तत्पूर्वकमक्षरशब्दितात्मस्वरूपसाक्षात्कारफलकं अकाम्यं कर्म च प्रथमषट्के उक्तम् । तदपि विना मनोनिग्रहं कर्तुमशक्यम् । अतः 'तानि सर्वाणि संयम्य युक्त आसीत मत्परः' इति 'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते' इति चोक्तेनोपायेन मनोनिग्रहं कृत्वा ततोऽक्षरसाक्षात्काराय फलाभिसन्धिरहितं कर्म कुरु । भगवत्प्राप्तये तत्साक्षात्कार आवश्यकः । तदर्थं तस्मिन्नतिशयितभक्तिरावश्यकी। तदुदयाय च तत्स्वरूपज्ञानं तदर्थं च विहितं अकाम्यं कर्म । सति चैवं आत्मसाक्षात्कारसाधनस्य आत्मध्यानस्य हेतुभूतेन कर्मणा को भगवद्भक्तेरुपकार इति चेत्। १ एवमनभिसंहितफलेन मदाराधनरूपेणानुष्ठितेन कर्मणा सिद्धेनात्मध्यानेन निवृत्ताविद्यादिसर्वतिरोधाने मच्छेषतैकस्वरूपे प्रत्यगात्मनि साक्षात्कृते सति मयि परा भक्तिः स्वयमेवोत्पद्यते। २ यथा बाल्ये बालक्रीडाप्रसङ्गेन नरेन्द्रभवनान्निष्क्रान्तस्य मार्गाद्भ्रष्टस्य व्याधगृहीतस्य ३ पक्कणे वर्तमानस्य राजकुमारस्य आप्तोपदेशात् स्वात्मनस्तथात्वं मत्वा विमृशतः स्वात्मनि राजसाम्यं अङ्गप्रत्यङ्गादिषु पश्यतः तस्मिन् पितृत्वप्रीतिर्निरतिशया जायते । एवमस्यापि यथोपदेशं भगवच्छेषभूते स्वात्मनि तत्साम्याकारेण साक्षात्कृते भगवति भक्तिः स्वत एवोत्पद्यते । भक्तिसिद्ध्यर्थं न किञ्चित् कर्तव्यमस्ति । वक्ष्यते च 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति कर्मयोगमुक्त्वा तेन 'बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च' इत्यारभ्य ब्रह्मभूयाय कल्पते इत्यात्मसाक्षात्कारमुक्त्वा तेन 'ब्रह्मभूतः प्रसन्नात्मा' इत्यारभ्य 'मद्भक्तिं लभते पराम्' इति भगवद्भक्तेः स्वत एवोत्पत्तिः । अनन्ययोगाशक्तानां अशक्तितारतम्येन अधोधः साधनपरम्परोपदेशोऽस्मिन् काष्ठात्वेन त्वदर्थकर्मयोगोपदेश उचितः। तेनैवोपसंहारे कर्तव्ये तदशक्तं प्रति मदर्थं कर्म तदर्थं कर्म इति द्वेधा विभज्य मदर्थकर्मकरणे अशक्तश्चेत् त्वं तदर्थं कर्म कुर्विति काष्ठात्वेन कर्मयोगोऽन्य उपदिष्टः। तत्र त्वदर्थं कर्म किं ; तदर्थं कर्म किं ; कस्तयोर्भेदः । मन्माहात्म्यज्ञानपूर्वकं मत्प्राप्त्यर्थं क्रियमाणं कर्म मदर्थं कर्म। आत्मस्वरूपयाथात्म्यानुसन्धानपूर्वकं आत्मध्यानद्वारा आत्मसाक्षात्कारार्थं क्रियमाणं कर्म तदर्थं कर्म। उभयमपि मद्विषयकं मदाराधनरूपमेव । तथाऽपि मत्प्राप्तये क्रियमाणं मदर्थं तत्प्राप्तये क्रियमाणं तदर्थं इति भेद इति चेत्। तर्हि तदर्थं कर्म अधोधः साधनपरम्पराकाष्ठात्वेन कथमुपदेष्टु-

१ भाष्यम् । २ तात्पर्यचन्द्रिका । ३ शबरालयं ।

मर्हम् । अत्यन्तक्लेशसाध्यात्मस्वरूपयाथात्म्यानुसन्धानपूर्वकतदर्थकर्मकरणं अतीव क्लेशसाध्यं न वा। उक्तं हि त्वया 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' इति इति चेत् सत्यम् । न मदर्थकर्मत्वेन तदर्थकर्मत्वेन च एकमेव वर्णाश्रमोचितं विहितं कर्म द्वितीयादावुक्तरूपं उच्यते येनेदमसाङ्गत्यं स्यात्। किन्तु मदर्थकर्मत्वेन १ आलयनिर्माणोद्यानकरणप्रदीपारोपणमार्जनाभ्युक्षणोपलेपनपुष्पाहरणपूजाप्रवर्तननामसङ्कीर्तनप्रदक्षिणस्तुतिनमस्कारादीनि कर्माण्युच्यन्ते । तेषु न प्रायशः स्वारसिकी प्रवृत्तिः । अपि तु वर्णाश्रमोचिते विहिते कर्मणि । न हि विहितं कर्म कुर्वाणा अपि आलयनिर्माणादौ प्रवर्तन्ते । अपि तु शते सहस्रे वा कश्चिदेव प्रवर्तते । विहितस्वकर्मकरणापेक्षया अधिकक्लेशसाध्यं हि आलयनिर्माणादिकर्मकरणम् । अतः आलयानिर्माणादिमदर्थकर्मकरणाशक्तस्य तत्करणप्रवृत्त्युत्पत्तये आत्मसाक्षात्कारफलकात्मध्यानहेतुभूतविहितकर्मकरणं काष्ठान्वेनोपदिष्टमिति नानुपपत्तिः । मदर्थत्वेन तदर्थत्वेन च विहितकर्मकरणाभिप्राये तदर्थकर्मकरणस्य क्लेशसाध्यत्वेन अधोऽधः साधनकाष्ठात्वेनोपदेशोऽसङ्गत एव स्यात् । न तथा । अतो युक्तमेवेदं २ मदुक्तमित्यवधारय । अन्यवस्तुप्रापककार्यप्रवृत्त्यपेक्षया नष्टस्वीयवस्तुप्रापककार्यप्रवृत्तिः स्वारसिकी हि लोके दृश्यते । अतो दुष्करमपि सुकरं भवति तदर्थं कर्मकरणमित्याशयः । अतोऽपि नानुपपत्तिः ॥ ११ ॥

अर्जुनः ।

३ एवं अधोऽधः साधनोपदेशेन किं कस्मादुत्तममिति फलितम् । तद्ज्ञाने उपर्युपरि साधनसम्पादनप्रयत्नः कर्तुं शक्यते । अतो ब्रूहि ।

कृष्णः ।

श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥

१ भाष्यं । २ अनायाससाध्यं साधनमननुतिष्ठतः आयाससाध्यसाधनानुष्ठानमेव पराकाष्ठा भवति कस्यचन कस्मिंश्चित्तोदे बहिरुद्गन्तुमन्तर्यतमाने तदनुदशाय शुण्ठीपंकलेपादौ सुकरे सुखावहे दुःखानुत्पादके साधने भिषजा अभिहितेपि अनादरेण मनोबुध्योः स्वच्छन्दप्रवृत्तिदोषेण च यः भिषजोक्तं नानुतिष्ठति तस्य अन्ततः चिकित्सकशल्यारोपणेनैव अपनोदनीयो भवति स तोदः इति लोके प्रसिद्धम् । तथेदमपीति केचित् । ३ द्वैतरीत्या व्याख्या ।

अभ्यासयोगेन तत इत्युक्तः अभ्यासः मत्कर्म परम इति सर्वकर्मफलत्यागं इति च काष्ठात्वेनोक्तात्कर्मयोगात् श्रेष्ठः। तस्मात् अभ्यासात् मय्येव मन आधत्स्व मयि बुद्धिं निवेशयेत्युक्तं ज्ञानं श्रेष्ठम् । तस्मात् ज्ञानात् योगेन इत्युक्तं ध्यानं श्रेष्ठम् । सकामध्यानात् अनन्येनेत्युक्तं अकाम्यध्यानं श्रेष्ठम् । फलत्यागसहितात् अकाम्य-ध्यानादव्यवधानेन अपरोक्षज्ञानद्वारा आवेशितचेतसामित्युक्तः असम्प्रज्ञातसमाधि-योगः । तेन च संसारसागरात् समुद्धर्ता इत्युक्तो मोक्ष इति क्रमः। अतः अका-म्यं कर्म कर्तव्यम् ।

१ अर्जुनः ।

किमकाम्यं कर्म अभ्याससामर्थ्यादिजननद्वारा मोक्षसाधनं भवति। किं तादृशं तत्।

कृष्णः ।

अभ्यासात् ज्ञानं श्रेष्ठं हि प्रसिद्धम् । तस्मात् ध्यानं श्रेष्ठम् । ध्यानात् अकाम्यं कर्म श्रेष्ठम् । फलत्यागसहितादकाम्यकर्मणोऽनन्तरं मोक्षः मोक्षजनकत्वेन फल-कामनारहितं कर्म परमश्रेष्ठम् । मोक्षो ब्रह्मज्ञानादेव भवति न कर्मणा। 'तमेवं विद्वानमृत इह भवति। नान्यःपन्था अयनाय विद्यते' इति श्रुतिः। सति चैवं त्यागा-च्छान्तिरनन्तरमिति कथमिति चेत्। नेयं कर्मणो मोक्षजनकत्वोक्तिः किं तु कर्मणि रुचिमुत्पादयितुं कर्मणः स्तुतिः । अविद्वत्कृतफलत्यागः । त्यागत्वेन विद्वत्कृ-तफलत्यागसाम्यात् स्तूयते । स्तूयन्ते हि इदानीन्तना अपि ब्राह्मणाः ब्राह्मणत्वेन समुद्रं पीतवता अगस्त्येन पृथिवीं निःक्षत्रां कृतवता परशुरामेण च साम्यात्। अगस्त्यवत् परशुरामवच्चासाध्यं कर्म कुर्युरिमे इति ब्राह्मणस्तुतेरभिप्रायः। तथा ऽत्र विद्वत्कृतफलकामनात्यागवत् अविद्वत्कृतोऽपि फलकामनात्यागः नियमेन ज्ञानद्वारा मोक्षहेतुर्भवति । अतोऽविदुषः फलकामनात्यागपूर्वकविहितकर्मकरणं आवश्यकमिति कर्मफलत्यागस्तुतेरस्या अभिप्रायः ।

शंक ।

'मय्येव मन आधत्स्वे'त्यारभ्य 'ततः कुरु यतात्मवान्' इत्यन्तेन सगुणब्रह्मोपासनमभिहितम् । तेन परिशुद्धबुद्धेर्निर्गुणोपासनक्रमं तत्फलं च ब्रूहि ।

कृष्णः ।

सगुणोपासनेभ्यः सर्वेभ्यः निर्गुणब्रह्मविषयकश्रवणाद्यभ्यासः श्रेष्ठः । तस्मात्

---

१ अद्वैतरीत्या व्याख्या ।

तज्जन्यं निर्गुणब्रह्मविषयकं ब्रह्मात्मैकत्वग्राहकं ज्ञानं श्रेष्ठम् । तस्मात् केवलात् ज्ञानात् निर्गुणब्रह्मविषयकं ध्यानं श्रेष्ठम् । तस्मात् प्रत्यगात्मवृत्तिवासनायाः कर्मत्वेन फलति यत् दृश्यजातं तस्य कर्मफलशब्दितस्य त्यागः निरन्तरनिर्विकल्पकसमाधिनिष्ठया अदर्शनं बाहिरन्तः सर्वत्र सर्वथा ब्रह्ममात्रोपलम्भः श्रेष्ठः तस्मात् त्यागात् अव्यवधानेन एतद्देहपातानन्तरं आत्यन्तिकसंसारोपशमरूपं ब्रह्मात्मना अवस्थानं लक्षणं विदेहकैवल्यं सिध्यति । अयं निर्गुणोपासनक्रमः तत्फलं च विदेहकैवल्यप्राप्तिः ।

१ अर्जुनः ।

हा हन्त अव्यवहितोपायाः अशक्यास्संवृत्ता मम । यद्यहं रजनीकरबिम्बलिप्सोदस्तहस्तस्तनन्धयवत् तेषु हठादेव प्रवर्तेय तर्हि तदसिध्या श्रमभाजनं परिहासभाजनं च स्याम् । किं करणीयम् । वद ।

कृष्णः ।

पार्थ मा व्यथिष्ठाः व्यवहिता एवोपायाः श्रेयांसः सौकर्यात् फलैक्याच्च । तत्र अभ्यासयोगेनेत्युक्तात् भक्तिशब्दितात्यर्थप्रीतिरहितात् कर्कशात् भगवद्विषयकाभ्यासात् सरसाभ्यासहेतुभूतं आत्मविषयकं अपरोक्षज्ञानं साक्षात्कारादिशब्दवाच्यं श्रेष्ठम् । हितत्वे तदपेक्षया अधिकं न स्वरूपतः । आत्मापरोक्षज्ञानात् आत्मस्वरूपानुसन्धानरूपं आत्मध्यानं श्रेष्ठं हितम् । आत्मध्यानात् फलत्यागोपेतं कर्म आत्मध्यानहेतुभूतं श्रेष्ठम् । तादृशात्कर्मणोऽनन्तरमेव मनसः शान्तिर्भवति । शान्तेन मनसा आत्मध्यानं आत्मध्यानात्तदापरोक्ष्यं तेन च भगवति भक्तिः । अतो भक्तियोगाशक्तस्य आत्मनिष्ठा तत्र मनःशान्तये फलकामनारहितमकाम्यं कर्म । इत्येवं सुकरः परमहितः सुगमोयं पन्थाः । ॥ १२ ॥

अर्जुनः ।

ये तु २ सर्वाणि कर्माणीत्युक्तरीत्या भगवदुपासनां कुर्वतोऽपेक्षितान् धर्मान् ब्रूहि । ये पूर्वं अव्यक्तं पर्युपासते ते प्राप्नुवन्ति मामेवेति परमोत्तमोत्तमत्वेनोक्ताः ३ अक्षरशब्दितनिर्गुणब्रह्मोपासकाः तेषां लक्षणभूतान् अपरोक्षज्ञानिनां साधकानां ज्ञानपरिपाकसाधनभूतान् मादृशानां मन्दानां सगुणब्रह्मोपासकानां निर्गुणब्रह्मोपासनप्राप्तिसाधनभूतान् धर्मान् ब्रूहि । ४ सर्वकर्मफलत्यागं तत इत्यादिसार्धश्लोकेन उक्तानां ५ अक्षरशब्दितात्मोपासकानां अपेक्षितान् धर्मान् ब्रूहि ।

---

१ विशिष्टाद्वैतरीत्या । २ म । ३ शं । ४ रा ।

कृष्णः ।

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १३ ॥

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥ १४ ॥

**अद्वेष्टेत्यारभ्य स्थिरमतिः इत्यन्तेन त्रयस्त्रिंशद्गुणान् ब्रवीमि । तान् सम्यगवधारय । सम्पादय च प्रयत्नेन । अपवादिष्वपि द्वेषो नैव १ कार्यः । समेषु स्नेहः कार्यः । अवरेषु दया कार्या । देहेन्द्रियादिषु पशुमित्रपुत्रकलत्रादिषु च ममेति बुद्धिर्न कार्या । २ अनात्मनि देहे अहमिति बुद्धिर्न कार्या । ३ कुलशीलवयोविद्याधनभवनादिभिः अहमहमित्यहङ्कारो न कार्यः । सुखे दुःखे च समेन भाव्यम् । आक्रोशनताडनादावपि क्षमा कार्या । सदा आत्मानन्दतृप्तत्वेन अन्यत्र अलंबुद्धिमता ४ भाव्यम् । यदृच्छोपनतेनैव सदा ५ सन्तोष्टव्यम् । उक्तं हि मया । यदृच्छालाभसन्तुष्ट इति । वक्ष्यते च सन्तुष्टो येन केनचिदिति । सदा कर्मयोगध्यानयोगादिकं ६ कार्यम् । सदा समाहितचित्तेन ७ भाव्यम् । सदा प्रकृतिबन्धरहितशुद्धात्मस्वरूपानुसन्धानं ८ कर्तव्यम् । उपायेन सदा मनो ९ वशीकर्तव्यम् । १० उदारस्वभावेन भाव्यम् । देहः ११ योगानुकूल्याय स्वाधीनीकर्तव्यः । उक्तं हि मया— निराशीर्यतचित्तात्मा इति एकाकी यतचित्तात्मा इति च । संशयविपर्ययरहितः दृढः आत्मानात्मविषयकनिश्चयः सम्पाद्यः । सदा तादृशनिश्चयवता भवितव्यम् । १२ सदा मनो १३ बुद्ध्योः मय्यर्पणं कार्यम् । एतादृशो यो भक्तः स मे प्रियः । मत्प्रियेण किमलभ्यम् । सर्वमपि तस्य सुलभम् । अत उक्तधर्मवान् भक्तो भूत्वा मे प्रियो भव ॥ १३ ॥ १४ ॥**

कृष्णः ।

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

१ अद्वेष्टैवेत्यन्वयः एवशब्दः सर्वत्र सम्बध्यते । एककमप्यावश्यकामाते भावः ।
२ रा शं । ३ म शं । ४ म शं । ५ रा शं । अत्र सद्यः सन्तुष्टचित्तानां इत्यादिकं अनुसन्धेयम् । ६ म । ७ शं । ८ रा । ९ म । १० रा । ११ शं । १२ सन्ननमित्यस्य सर्वत्र सम्बन्धः । १३ रा । आराध्यत्वेन चिन्तनं मनसोऽर्पणं फलप्रदत्वाध्यवसायो बुद्धेरर्पणम् ।

लोकानामनुद्वेगकरण भाव्यम् । क्रूरत्वे दृष्ट्वैनं लोका उद्विजेरन् । अक्रूरेण भाव्यम् । अन्यान् दृष्ट्वा न भवव्यमनेन । अकार्यं कुर्वन् कृतवांश्च अन्यस्माद्बिभेति । अकार्यगन्धरहितेन भाव्यम् । स्वस्य लाभे उत्साहः हर्षः परस्य लाभे रोगाद्युपद्रवप्राप्तौ च असहिष्णुता अमर्षः । चोरसर्पव्याघ्रादिदर्शनेन मनसो विकारः भयम् । भयहेतुकश्चित्तक्षोभः १ प्राणनाशहेतुभूतानर्थप्राप्तिहेतुकश्चित्तविकारो वा २ कथमेकाकी विजने सर्वपरिग्रहशून्यो जीविष्यामीत्येवं व्याकुलतारूपश्चित्तवृत्तिविशेषो वा उद्वेगः । एतच्चतुष्टयरहितेन भाव्यम् । ३ एवंभूतश्च यो भक्तः स मे प्रियः ॥ १५ ॥

कृष्णः ।

अनपेक्षः शुचिर्दक्ष उदासीनगतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

४ फलापेक्षारहितः ५ देहेन्द्रियादिषु भोगोपकरणेषु च निस्पृहो वा । ६ मृज्जलाभ्यां शौचं बाह्यम् । मनसः शुद्धिरान्तरं शौचम् । एतदुभयशौचवान् शुद्धदेहः । ७ शास्त्रविहितद्रव्यवर्धितकायः इति वा । ज्ञातुं कर्तुं च समर्थः । ८ अन्यतरस्य पक्षे अप्रविष्टः ९ शास्त्रीयकर्मणोऽन्यत्र प्रवृत्तिशून्यो वा । १० निर्भयः । ११ परकृतापकारैरप्यप्राप्तमनःक्लेशो वा । १२ शीतोष्णस्पर्शादिषु व्यथारहितो वा । १३ अवैष्णवकर्मपरित्यागी । १४ सर्वकाम्यकर्मपरित्यागी । १५ अशास्त्रीयसर्वकर्मपरित्यागी वा । एतादृशो यो मे भक्तः स मे प्रियः । अत ईदृशेन भवितव्यम् ॥ १६ ॥

१ शं। २ शं। ३ रा सचेत्यन्वयः सोपीत्यऽर्थः । पूर्वश्लोकोक्तमैत्रत्वकरुणत्वाद्यभावेपि एतत्श्लोकोक्तगुणवत्त्वमात्रेणापि मे प्रियो भवतीति भावः । ४ म । ५ शं । रा ६ म । शं । ७ रा । ८ म । शं । ९ रा । १० शं । ११ म । १२ रा । १३ म अवैष्णवसर्वकर्मपरित्यागी इति कर्माभिमानत्यागी इति कर्मफलत्यागी इति भगवति समर्पणरूपत्यागवानिति च चत्वारोऽर्थाः । १४ शं । १५ रा । शंक । सर्वकर्मसन्न्यासी । ज्ञानिनः सर्वकर्मसन्न्यासविधानात् विहिताकरणस्य अदोषत्वेन सर्वकर्मसन्न्यासस्य अबाधकत्वाकर्तव्यकर्माकरणाकर्तव्यसन्न्यासकरणकृतमनःसन्तापरहितः तटस्थवदविक्रियः ।

कृष्णः ।

> यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
> शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥

सर्वदा न हृष्यति सर्वदा न द्वेष्टि सर्वदा न शोचति सर्वदा न कांक्षति । अशुभवत् शुभमपि परित्यजति ज्ञानभक्ति १ वैराग्यादीनि विना अन्यत् शुभमशुभवत् परित्यजति । तन्न कांक्षति न २ केवलं हेत्वनागमे किं तु सत्यपि हेतौ हर्षद्वेषादिकं न करोति । प्रियं प्राप्य न हृष्यति अप्रियं प्राप्य न द्वेष्टि । हर्षनिमित्तं भार्यापुत्रवित्तादिकं अप्राप्तं न कांक्षति । प्राप्तस्य तस्य अपगमेऽपि न शोचति । अशुभसाधनं पापमिव स्वर्गादिशुभसाधनं पुण्यमपि त्यजति । ३ ज्ञानमहिम्ना पुण्यपापरूपसर्वकर्मपरित्यागी । उक्तं हि मया । ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन इति । ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधा इति च । ४ हर्षनिमित्तं प्राप्य न हृष्यति । अतः तन्न कांक्षति । शोकनिमित्तं प्राप्य न शोचति । अतः तत् न द्वेष्टि । एवंभूतः यो मे भक्तः स मे प्रियः । उक्तं हि मया । यः सर्वत्रानभिस्नेहः तत्तत्प्राप्य शुभाशुभम् । नाभिनन्दति न द्वेष्टि इति । न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियमिति च । अत ईदृशेन भवितव्यम् । ॥ १७ ॥

कृष्णः ।

> समश्शत्रौ च मित्रे च तथा मानावमानयोः ।
> शीतोष्णसुखदुःखेषु समस्सङ्गविवर्जितः ॥ १८ ॥
>
> तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
> अनिकेतःस्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥ १९ ॥

शत्रौ मित्रे च तथा माने अवमाने च समेन भवितव्यम् । शीते उष्णे सुखे दुःखे च ५ समेन भाव्यम् । ६ फलेष्वनासक्तेन भवितव्यम् । दोपक'.नरूपायां

---

१ अत्र भक्तिर्ज्ञानं च वैराग्यमृते यो नेच्छति कचित् । शुभाशुभपरित्यागी विद्वद्भिः कीर्तितो हि सः । इति प्रमाणमनुसन्धेयम् । २ शं । ३ । शं । ४ । म ।
५ शत्रुमित्रादाविव शीतोष्णादावपि समत्वमावश्यकमिति सूचनाय सम इत्यस्य पुनः प्रयोगः । ६ शं । अशोभने शोभनाध्यासः अनात्मनि आत्मतादात्म्याध्यवसायः सङ्गः तद्रहितेन भाव्यम् ।

निन्दायां गुणकथनरूपायां स्तुतौ च अन्यैः कृतायां तत्कृतरोषहर्षवता न भवितव्यं असाधुर्निन्दति निन्दतु का हानिः । साधुः स्तौति स्तौतु को लाभः इति निन्दा-स्तुत्योः उदासीनेन भाव्यम् । मौनं मननं वाक्संयमो वा तद्वता भाव्यम् । निन्दतो निन्दा स्तुवतः स्तुतिश्च न कार्या । येन केनचित् यदृच्छयोपनतेन सन्तुष्टेन अलंबुद्धिमता च भवितव्यम् । ममेदमित्यभिमानजननभिया क्वापि नियतवासो न कार्यः । सत्यपि नियतवासे गृहोपलक्षितेषु सर्वेषु सुखसाधनेषु अनासक्तेन भाव्यम् । १ अ इति ब्रह्मेति श्रुत्या अशब्दवाच्यो यः परमात्मा तस्मिन्नेव आश्रयत्व-बुद्धिः कार्या । एवंभावासिध्यर्थं बुद्धौ स्थैर्यं सम्पाद्यम् । आत्मा देह इति द्वयं तत्र अस्थिरे देहे बुद्धिमकृत्वास्थिरे २ आत्मनि बुद्धिः कार्या । उक्तं चैतत् मया स्थि-रबुद्धिसम्मूढ इति । एवं भूतो यो मे भक्तः सः नरः मे प्रियः । साधनेषु भक्ते-र्मुख्यत्वद्योतनाय पुनः पुनस्तदुक्तिः । एवं भूत्वा यो मे प्रियो भवितुमर्हति स एव नरः ३ मनुष्यः अन्यस्तु पशुः तस्यैव जन्म सार्थकम् । अन्यस्य तु जन्म व्यर्थम् । अद्वेष्टासर्वभूतानामित्यादिनोक्ताः धर्माः मुमुक्षणा अवश्यं सम्पादनीया इत्यत्र महा-तात्पर्यात् क्वचिदर्थतः क्वचिच्छब्दतश्च पौनरुक्त्यं न दोषाय । ईदृशेन भवितव्यं मुमुक्षुणा अतस्त्वमीदृशस्सन् कर्म कृत्वा ज्ञानभक्तिवैराग्यादिसाधनसामग्र्या मुक्तो भव । १८ । ।१९ ।

कृष्णः ।

> ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
> श्रद्दधानामत्परमाभक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

४ अद्वेष्ट्यादिनोक्ततत्तत्साधनमात्रवन्तोऽपि मे प्रियाः । उक्तं हि मया तत्र तत्र मे प्रियः मे प्रिय इति । ये तु अद्वेषादिसर्वसाधनवन्तः तेभ्यस्तेषामतिशयितो विशेषः । श्रद्धाशब्दितास्तिक्यबुद्ध्या मत्परत्वबुद्ध्या च युक्ताः धर्मशब्दवाच्यभ-गवत्प्रीतिद्वारा तत्प्राप्तिरूपमोक्षसाधनं अद्वेषादिधर्मजातं उक्तरीत्या नित्यं सम्य-गनुतिष्ठन्ति ते भक्ताः अतीव अत्यन्तं मे प्रियाः । उक्तं हि मया । प्रियो हि ज्ञानिनो ऽत्यर्थमहं स च मम प्रिय इति । तेषामैहिकमामुष्मिकं च करस्थमेव । अत-स्त्वं द्वितीयषट्कोक्तरीत्या मदीयं माहात्म्यमनुसन्दधानःतत्पूर्वकसुदृढस्नेहरूप-

---

१ म । २ रा । ३ । ४ द्वैतरीत्या व्याख्या । अष्टश्लोकी प्रकं प्रकरणम् ।

भक्तियोगवान् उक्तधर्मवांश्च भूत्वा मे अत्यन्तं प्रियो भव । ततश्च त्वमनाया-सेन सकलमैहिकमामुष्मिकं च भोगं प्राप्स्यसि । श्रेयानयमुपदेशः । स्यादनेन सर्वेषां मङ्गलम् २० ॥ १ ये तु निर्गुणोपासकाः सिद्धाः श्रद्दधानाः अहं निर्गुणं ब्रह्मैव परमप्राप्यो येषां ते मत्परमाः तादृशाः सन्तो धर्मरूपं २ धर्मादनपेतं अमृत-शब्दितमोक्षसाधनं अमृतवत्परमात्मानन्दहेतुभूतं च धर्मजातमिदं सम्यगनुति-ष्ठन्ति ते भक्ताः अतीव मे प्रियाः ।

३ शंक । सन्तु उक्तधर्मवन्तो महान्तो निर्गुणब्रह्मोपासकाः परमोत्तमोत्तमाः । मन्देषु निर्गुणब्रह्मोपासकापेक्षया युक्ततमत्वेनोक्ताः ये सगुणब्रह्मोपासकाः तेषा-मक्लेशेन क्लेशसाध्यफलप्राप्तिरूपो महान् विशेषः । ते यदि मां वासुदेवं परममीश्वरं मत्वा मदुक्ति श्रद्दधानाः तेषामहं समुद्धर्ता इत्यत्रोक्तदिशा सगुणब्रह्मोपासन-द्वारा निर्गुणं ब्रह्म मां प्राप्तुमिच्छन्तः इदं अद्वेष्टेत्यादिनोक्तं साधनजातं उक्तरी-तिमनतिक्रम्य यत्नादनुतिष्ठन्तः सगुणं मामुपासते । तर्हि ते भक्ता अतीव मे प्रियाः । मदत्यर्थप्रियाणां अनायासेन निर्गुणब्रह्मभावः सम्पद्यते । ततस्त्वं द्वितीय-षट्कोक्तरीत्या भक्तियोगं लब्ध्वा तेन सगुणं मां भजन्ननायासेन निर्गुणं ब्रह्म प्राप्नु-हीति । श्रेयानयमुपदेशः स्यादनेन मङ्गलम् ॥ २० ॥

४ अद्वेष्टेत्यादिना अक्षरनिष्ठा उक्ताः । तेभ्यः परमात्मोपासका युक्ततमा इति विशेष उक्तस्तेषां तमवधारय । ये तु परमात्मनो ममोपासकाः श्रद्धधानाः मामेव परमप्राप्यं मन्वानाः सन्तः धर्मादनपेतं मोक्षसाधनं भक्तियोगरूपमिदम् साध-नं सम्यगनुतिष्ठन्ति ते मय्यावेश्य मनो ये मां इत्युक्ताः मदुपासकाः अतीव मे प्रियाः । अक्षरनिष्ठाः प्रियाः मन्निष्ठास्तु अतीव प्रियाः । अतस्त्वं द्वितीयषट्कोक्त-रीत्या भक्तियोगं लब्ध्वा तेन मामुपास्व । तेन तव स्यादखिलं मङ्गलम् ॥ २० ॥

इति श्रीभगवद्गीतोपन्यासदर्पणे भक्तियोगाध्यायार्थप्रदर्शको

द्वादशः प्रतिबिम्बः ॥ १२ ॥

अद्वैतरीत्या व्याख्या । अष्टश्लोकी एकं प्रकरणम् । २ धर्म्यामृतमिति पाठ इदम् । ३ सप्तश्लोकी एकं प्रकरणम् । अन्त्ये तु यथोपक्रममुपसंहारः । ४ विशिष्टाद्वैतरीत्या व्याख्या ।

एषाप्रकटनपत्रिका यथानुकूलं सर्वेभ्योयुष्मन्मित्रेभ्यो बन्धुभ्यश्च मयि कृपया प्रदर्शयितव्या ।
किंच ये इदं पुस्तकमपेक्षेरन् तादृशानां नामादिकं मह्यं निर्दिष्टंचेत्, तेभ्योऽहमिमांप्रेषयेयम्.

---

अचिरादेव प्रकाशयिष्यते ॥ ॥ श्रीः ॥ अचिरादेव प्रकाशयिष्यते ॥

अनितरसाधारणया द्वैताद्वैतविशिष्टाद्वैतरूपमतत्रयसाधारण्या सुललितपदविन्यासविचित्रितया, आत्मार्थमवबुभुत्सूनां गीतोपन्यासकानां चात्यन्तमुपकारिण्या, अतिसमीचीनदेवनागरीमुद्राक्षरमुद्रितया **गीतोपन्यास दर्पण** अभिख्यायाव्याख्यया विभूषिता ॥

इयंच व्याख्या विचित्रशतावधानी विद्वन्मणि, महाभागवत, सलक्षणवर्णक्रमघनपाटी, मतत्रयगीतोपन्यासविद्वत्प्रमुख विविध विरुदविभूषितैः **पण्डित टि. लक्ष्मणाचार्यै** विरचिता तत्पौत्रेणच टि. एन्. रघूत्तमाचार्येण प्रथम भाग पण्डितमहाशयानां भूमिकयासह संपुटत्रयेण प्रकाश्यमानाच विजयतेतमां ॥

| | | रू. |
|---|---|---|
| प्रथम संपुटः | (१ to ६ अध्यायाः (यन्त्रस्थः कश्चिद्भागः) १९२५ ऐप्रेल् मासि (प्रकाश्येत ॥ | ५ |
| द्वितीय संपुटः | (७ to १२) १९२५ आगस्त् मासि ॥ | २ |
| तृतीय संपुटः | (१३ to १८) इदानीं सज्जोऽस्ति ॥ | ३ |

पुस्तकसंख्यायाः परिमितत्वात् नैराश्यपरिहाराय अचिरादेव अपेक्षापत्र प्रतीक्ष्यते ॥

१९२५ ऐप्रेल् मासादर्वागेव स्वापेक्षां निवेदयतां भागत्रयस्यापि देयत्वेन कल्पितं मूल्य रूप्यकाष्टकं ॥

१९२५ ऐप्रेल् मासादर्वागेवस्वापेक्षा निवेदितवद्भ्यो निवेदनानन्तरमेव तृतीयस्संपुटो वि. पी. द्वारा रूप्यकत्रयस्य प्रेष्येत ॥

१९२५ ऐप्रेल् मासादनन्तरं प्रथमस्संपुटो रूप्यकत्रयस्य आगस्ट् मासादनन्तरं द्वितीयसंपुटो रूप्यकद्वयस्य च प्रेष्येत ॥

बन्धनं विना यथायथमेव जिघृक्षतां कालानुरोधेन मूल्यं किंचिन्न्यूनीक्रियेत ॥

सर्वत्रापि प्रेषणव्ययः पृथगेव ॥

एतत्पुस्तकप्रचारकाणां प्रत्येकं कमिषन् दीयेत ॥

अतिदुर्लभमिदं ग्रन्थं प्रकाशयितुमुद्युक्तं पण्डितमहाशयानां पौत्रं मां सर्वेऽपि संस्कृतभाषाभिमानिनः आस्तिकवर्याः पुस्तकग्रहणादिभिः अनुगृह्णीयुरिति सप्रश्रयमभ्यर्थये ॥

इत्थं विद्वज्जनकृपाकांक्षी

**T. N. रघूत्तमाचार्यः**

प्रकाशकः गीतोपन्यास दर्पण आपीस तिरुवादी, तञ्जावूर्—Dt.